## भारत-वन्दना

मातृभूमे! नमो मातृभूमे! नमः।

मातृभूमे! नमो मातृभूमे! नमः।

तव गिरिभ्यो नमस्ते नदीभ्यो नमः।

तव वनेभ्यो नमो जनपदेभ्यो नमः।

तव कणेभ्यो नमस्ते अणुभ्यो नमः।

मातृभूमे! नमो मातृभूमे! नमः।

प्राणदे! त्राणदे! देवि! शक्तिप्रदे!

ऋद्धिदे! सिद्धिदे! भुक्तिमुक्तिप्रदे!।

सर्वदे! सर्वदा देवि! तुभ्यं नमः।

मातृभूमे! नमो मातृभूमे! नमः।

-पं0 वासुदेव द्विवेदी 'शास्त्री'

### शब्दार्थः

मातृभूमे! = हे मातृभूमे (सम्बोधन)। नमः = नमस्कार(अस्ति)। तव = तुम्हारे।

गिरिभ्यः = पर्वतों को। नदीभ्यः = नदियों को। वनेभ्यः = जंगलों को। जनपदेभ्यः = राज्यों (प्रान्तों) को। कणेभ्यः = कणों को। अणुभ्यः = अणुओं को। प्राणदे! = प्राण देने वाली। त्राणदे! = त्राण देने वाली, रक्षा करने वाली। शक्तिप्रदे! = शक्ति प्रदान करने वाली। ऋद्धिदे! = सम्पन्नता देने वाली। सिद्धिदे! = सिद्धि (पूर्णता) देने वाली। भुक्तिमुक्तिप्रदे! = भोग और मुक्ति (मोक्ष) देने वाली। सर्वदे! = सब कुछ देने वाली (सभी सम्बोधन के रूप)। सर्वदा = सदा। तुभ्यम् = तुमको।

अन्वयः-

हे मातृभूमे! (तुभ्यम्) नमः। हे मातृभूमे! (तुभ्यम्) नमः। तव गिरिभ्यः नमः। तव नदीभ्यः नमः। तव वनेभ्यः नमः। तव जनपदेभ्यः नमः। तव कणेभ्यः नमः। तव अणुभ्यः नमः। हे मातृभूमे! (तुभ्यम्) नमः। हे मातृभूमे! (तुभ्यम्) नमः। हे देवि! हे प्राणदे! हे त्राणदे! हे शक्तिप्रदे! हे ऋद्धिदे! हे सिद्धिदे! हे भुक्तिप्रदे! हे मुक्तिप्रदे! हे सर्वदे! तुभ्यं सर्वदा नमः। हे मातृभूमे! नमः। हे मातृभूमे! नमः।

शिक्षण-सङ्केतः

वन्दनागीतस्य सामूहिकं गानं कारयत।

स्मरणीयम्-

प्रभोऽहं सदा सत्यवादी भवेयम्

प्रभो नैव स्वप्ने पि मिथ्या वदेयम्।

भवेयं सदा लोक- कल्याणकारी

भवेयं जगद्दुःख-दैन्योऽपहारी।

प्रभोऽहं सदा मातृभक्तो भवेयम्

प्रभोऽहं सदा पितृभक्तो भवेयम्।

*प्रभोऽहं सदा सदोऽचार्यभक्तो भवेयम्*

*प्रभोऽहं सदा देशभक्तो भवेयम्।*

*एतदपि जानीत-*

*वाराणस्यां महात्मा गांधी काशीविद्यापीठपरिसरे 'भारतमाता मंदिरम्' अस्ति।*

**प्रथमः पाठः**

## पुनरावलोकनम्-1

### कः धावति?

**अश्वः धावति।**

**कौ धावतः?**

**अश्वौ धावतः।**

**के धावन्ति?**

**अश्वाः धावन्ति।**

*कः खादति*?

*नरः खादति*।

*कौ खादतः*?

*नरौ खादतः*।

*के खादन्ति*?

*नराः खादन्ति*

*का पठति?*

*बालिका पठति।*

*के पठतः?*

*बालिके पठतः।*

*काः पठन्ति*

*बालिकाः पठन्ति*

  

*का जलंपिबति ?*

*अजा जलं पिबति।*

*के जलं पिबतः ?*

*अजे जलं पिबतः*

***काः जलं पिबन्ति*** ?

***अजाः जलं पिबन्ति***

***किं पतति*** ?

***फलं पतति***।

***के पततः*** ?

***फले पततः***।

***कानि पतन्ति*** ?

***फलानि पतन्ति***।

*किं विकसति* ?

*कमलं विकसति*।

*के विकसतः* ?

*कमले विकसतः*।

*कानि विकसन्ति* ?

*कमलानि विकसन्ति*।

**शब्दार्थः**

*कः = कौन का = कौन किम् = कौन*

*कौ = कौन दोनों के = कौन दोनों*

*के = कौन सब काः = कौन सब कानि = कौन सब*

**अभ्यासः**

1. *चित्रानुसारं संस्कृते वाक्यानि रचयत* -

*कः धावति* ?

***का लिखति*** ?

***किं पतति*** ?

***के खेलन्ति*** ?

***काः उड्डयन्ति*** ?

***कानि विकसन्ति*** ?

................. .

**2. *चित्रानुसारं संस्कृते वाक्यानि रचयत-***

***काः पठन्ति*** ?

***बालिकाः पठन्ति***।

......................

..........................

**3.*उदाहरणानुसारं पुल्लिङ्गरूपाणि लिखत-***

*शब्दः एकवचनम् द्विवचनम् बहुवचनम्*

*यथा- अश्वः अश्वौ अश्वाः*

*नर* .......... ............. ..........

*गज* ........... ........... ................

*मृग* .......... .......... ................

*वानर* .......  .......... ...............

*सैनिक* .................... ........

*विशेषः- पढ़ें  और समझें -*

1. '*अश्वः धावति*' *में* '*धावति*' *क्रियापद है जो दौड़ने की क्रिया को बता रहा है।*'*धावति*' *शब्द में*  '*धाव*' *भाग को धातु तथा* '*ति*' *भाग को प्रत्यय कहते हैं। इस प्रकार धाव+ति* (*धातु+प्रत्यय*) *के योग से क्रियापद* '*धावति*' *बना है।*

*विशेष-*

(*क*) '*अश्वः धावति*' *वाक्य में घोड़े के लिए* '*अश्वः*' *पद का प्रयोग हुआ है, इसे संज्ञा पद कहते हैं। क्रिया पद के समान ही संज्ञा पदों में भी एकवचन, द्विवचन और बहुवचन के रूप अलग- अलग होते हैं।*

(*ख*) '*अश्वः*' *शब्द के अन्त में* '*अ*' *होने के कारण इसे* '*अकारान्त शब्द*' *कहते हैं।*

*विशेष- प्रथम पुरुष, जैसे- खेलति, खेलतः, खेलन्ति क्रियापद हमारे अथवा तुम्हारे से भिन्न किसी दूसरे के खेलने को बताता है। इसलिए इसे प्रथम पुरुष अथवा अन्य पुरुष की क्रिया कहते हैं।*

4. **(*क*)** *उदाहरणानुसारं स्त्रीलिङ्गरूपाणि लिखत-*

*एकवचनम् द्विवचनम् बहुवचनम्*

*यथा-अजा अजा अजे अजाः*

*शिक्षिका* ........... .......... ..........

*बालिका* ........... ............ ..........

*विशेष* -

1. *संज्ञा पदों को तीन लिंगों बाँटते हैं-*

*पुल्लिङ्ग- बालक*, *वानर*, *गज आदि*।

*स्त्रीलिङ्ग-अजा*, *लता*, *चटका*, *बालिका आदि*।

*नपुंसकलिङ्ग-पुस्तक*, *कमल*, *पुष्प*, *मित्र आदि*।

2. *संज्ञा पदों से लिङ्ग का बोध होता है*, *किन्तु क्रिया पदों से लिङ्ग का बोध नही होता है*। *इसलिए संज्ञा के लिङ्ग का क्रिया पद पर कोई प्रभाव नहीं पड़ता है*, *जैसे-बालकः धावति* (*पुल्लिङ्ग*)। *बालिका धावति* (*स्त्रीलिङ्ग*)।

*मित्रं धावति* (*नपुंसकलिङ्ग*)।

(*ख*) .*उदाहरणानुसारं नपुंसकलिङ्गरूपाणि लिखत-*

*एकवचनम् द्विवचनम् बहुवचनम्*

*यथा-*

*फलम् फलम् फले फलानि*

*पुस्तकम्* .......... .......... ..........

पुष्पम् ........... ........... ...........

5. मञ्जूषातः पदानि चित्वा वाक्यानि पूरयत-

के ,खादति, धावतः, गच्छन्ति,काः, कानि ,प्रवहति ,का,

(क) बालकः ...............

(ख) कुक्कुरौ ..............

(ग) जलम् ................

(घ) गजाः ................

(ङ) ..................... नमन्ति ?

च) ....................... उत्पतति ?

(छ) ...................... विकसन्ति ?

(ज) ........................ धावन्ति ?

6. चित्रानुसारं संस्कृतपदानि लिखत-

............................

............................

.

............................

***7.संस्कृतभाषायाम् अनुवादं कुरुत-***

(*क*) ***दो आदमी खाते हैं।***

(*ख*) ***आदमी खाता है।***

(*ग*) ***लड़कियाँ पढ़ती हैं।***

(*घ*) ***बकरी पानी पीती है।***

(*ङ*) ***कमल खिलते हैं।***

***ध्यातव्यम्-***

(*क*) ***<u>संस्कृते त्रयः पुरुषाः भवन्ति</u> - प्रथमपुरुषः, मध्यमपुरुषः, उत्तमपुरुषः।***

(*ख*) ***<u>संस्कृते त्रीणि वचनानि भवन्ति</u> - एकवचनम्, द्विवचनम्, बहुवचनम्।***

(ग) *संस्कृते त्रीणि लिङ्गानि भवन्ति- पुंल्लिङ्गम्, स्त्रीलिङ्गम्, नपुंसकलिङ्गम्* ।

*वार्तालापः*

*सुप्रभातम्।*

*सुप्रभातम् सुप्रभातम्* !!

*मम नाम अर्पिता।*

*भवतः नाम किम्* ?

*मम नाम सौरभः।*

*भवती कस्यां कक्षायां पठति* ?

*अहं षष्ठकक्षायां पठामि।*

*अहमपि।*

*कः विषयः प्रियः* ?

*संस्कृतम्।*

*शोभनम्।*

*विशेष- परस्परं वार्तालापाय उपरि लिखितवाक्यानाम् अभ्यासं कारयत।*

**द्वितीयः पाठः**

## पुनरावलोकनम्-2

***एकवचनम्***

***एषः कः*** ?

***एषः छात्रः।***

***एषः किं करोति*** ?

***एषः छात्रः पुस्तकं पठति।***

***द्विवचनम्***

*एतौ कौ ?*

*एतौ गजौ।*

*एतौ किं कुरुतः?*

*एतौ गजौ जलं पिबतः।*

*बहुवचनम्*

*एते के ?*

*एते कपोताः।*

*एते किं कुर्वन्ति?*

*एते कपोताः तण्डुलान् खादन्ति।*

**स्त्रीलिङ्गम्**

*एकवचनम्*

*एषा का?*

*एषा बालिका।*

*एषा किं करोति?*

*एषा बालिका अम्बां नमति।*

*द्विवचनम्*

*एते के?*

*एते अजे।*

*एते किं कुरुतः ?*

*एते अजे घासं चरतः।*

**(ख) 'युष्मद्-अस्मद्'-शब्दः**

(मध्यमपुरुषः उत्तमपुरुषः च)

अध्यापकः - हे बालक! त्वं किं पठसि?

बालकः- श्रीमन्! अहम् इतिहासं पठामि।

अध्यापकः- हे बालकौ!युवां किं पठथः?

बालकौ- आवां संस्कृतभाषां पठावः।

अध्यापकः- शोभनम्। इयं भाषा सरला मधुरा च अस्ति।

अध्यापकः- हे बालकाः! यूयं किं पठथ?

बालकाः- श्रीमन् ! वयं विज्ञानं पठामः।

अध्यापकः- बाढम्। विज्ञानं जीवने आवश्यकं भवति।

जानीथ! पठनेन ज्ञानं भवति क्रीडनेन च शरीरं स्वस्थंभवति।

बालकाः- आम् श्रीमन्! वयं मनोयोगेन पठामः, स्नेहेन खेलामः,

सदा प्रसन्नाः च भवामः।

एषः = यह ( पुंल्लिङ्गम् ) एषा = यह ( स्त्री0 ) एतत् = यह (नपुंसक0)

एतौ = ये दोनों ( “ ) एते = ये दोनों ( “ ) एते=ये दोनों ( “ )

एते = ये सब ( “ ) एताः = ये सब ( “ ) एतानि= ये सब ( “ )

त्वम् = तुम (तीनों लिङ्ग) युवाम् = तुम दोनों (तीनों लिङ्ग) यूयम्=तुम सब (तीनो लिङ्ग)

अहम् = मैं ( “ ) आवाम् = हम दोनों ( “ ) वयम्=हम सब ( “ )

1. *सर्वनामशब्दानां प्रयोगं पश्यत-*

(*क*) *छात्रः पठति*। (*ख*) *अश्वाः धावन्ति*।

*कः पठति*? *ते धावन्ति*।

(*ग*) *छात्रा वदति*। (*घ*) *बालकः नमति*।

*सा वदति*। *एषः नमति*।

***अभ्यासः***

*विशेष*-(*क*) *किसी व्यक्ति*, *वस्तु*, *स्थान तथा गुण अथवा भाव के नाम को संज्ञा कहते हैं*, *जैसे- बालक*, *कलम*, *प्रयाग*, *सुन्दरता*, *कोमलता आदि*।

(*ख*) *संज्ञा के स्थान पर जिन शब्दों का प्रयोग किया जाता है उन्हें सर्वनाम कहते हैं*, *जैसे- वह*, *यह*, *कौन*, *मैं*, *तुम*, *आदि*।

*बालक जाता है*। *वह जाता है*।

(*संज्ञा*) (*सर्वनाम*)

(ङ.) *पत्रं पतति*। (*च*) *बालकौ गच्छतः*।

*तत् पतति*। *तौ गच्छतः*।

2-*सर्वनामपदैः सह उचितक्रियापदानां प्रयोगंकुरुत-*

*सर्वनाम-पदम् क्रिया-पदम्*

*यथा- एषा पठति*

*एषः गच्छन्ति*

*एतौ धावतः*

*एताः पतति*

*एतत् नमतः*

*एते खेलति*

*विशेष-*

1. *एषः गजः गच्छति*।

2. *ताः बालिकाः पठन्ति*।

3. *इमानि फलानि मधुराणि सन्ति*।

*उपर्युक्त की भाँति आपने पढ़ा कि संज्ञापदों के साथ भी सर्वनामपदों का प्रयोग होता है। यह ध्यान रहे, संज्ञापदों में जो लिङ्ग और वचन होता है उसी लिङ्ग और वचन में सर्वनामपदों का प्रयोग किया जाता है। इस प्रकार सर्वनाम में भी तीनों लिङ्ग और तीनों वचन होते हैं।*

3. *चित्रानुसारं संस्कृते उत्तरत-*

*एतौ कौ* ?

*एताः किं कुर्वन्ति* ?

***एतानि कानि सन्ति***?

4. ***मध्यमपुरुषस्य 'क्रियायाः' प्रयोगं कुरुत-***

(*क*) ***त्वम्*** ..... । (***लिख्***) (*ख*) ***युवाम्*** ..... । (*पठ्*) (*ग*) ***यूयम्*** ......। (***धाव्***)

**5. *उत्तमपुरुषस्य 'कर्तुः' प्रयोगं कुरुत-***

(*क*) ....... ***शिक्षकं नमामि***। (*ख*) ....... ***पुस्तकं पठावः***। (*ग*) ...... ***भोजनं कुर्मः***।

**6. *संस्कृतभाषायाम् अनुवादं कुरुत-***

(*क*) ***मैं खेलता हूँ***। (*ख*) ***हम सब खाते हैं***। (*ग*) ***वह हँसती है***।

(घ) ***तुम दोनों लिखते हो***। (ड.) ***वे बालिकाएँ हैं***। (च) ***यह फल गिरता है***।

**(*क*)*मंजूषासहाय्येन वाक्यानि रचयत-***

***पु***0- ***बालकः/सः/एषः/कः गच्छति***

***स्त्री***0- ***बालिका/सा/एषा/का गमिष्यति***

*नपुं0- वाहनम्/तत्/एतत्/किम् गच्छतु*

*यथा- बालकः गच्छति।*

...............................

...........................

*शिक्षकः अनेन प्रकारेण अन्यानपि अभ्यासान् कारयेत्।*

***शिक्षण-सङ्केतः***

(*क*) *पाठे आगतानां सर्वनामशब्दानाम् अभ्यासं परिशिष्टभागात् कारयत।*

(*ख*) *वाक्यानां वाचनं तथा लघु-संस्कृतवाक्यानां सहायतया प्रश्नोत्तराणां गतिविधिं कारयत।*

'*विद्या ददाति विनयम्*

## तृतीयः पाठः

# अस्माकं परिवेशः

*इदं क्रीडाक्षेत्रम् अस्ति। बालकाः कन्दुकेन खेलन्ति। केचिद् बालकाः वेगेन धावन्ति। वयं नेत्राभ्याम् बालकान् पश्यामः। बालकाः सहचरैः सह क्रीडन्ति। अत्र बालिकाः अपि उत्साहेनक्रीडन्ति।*

*विद्यालयाः शिक्षार्थं भवन्ति। छात्राः पठनाय विद्यालयं गच्छन्ति। वयमपि पठनाय विद्यालयं गच्छामः। यूयमपि विद्यार्जनाय तत्र गच्छथ। ते च ताः च अध्ययनाय एव विद्यालयं गच्छन्ति। सा पुस्तिकाभ्यः पुस्तकालयं गच्छति।*

*इदम् उपवनं ग्रामात् बहिः अस्ति। जनाः गृहेभ्यः अत्र आगच्छन्ति। उपवनरक्षकः कूपात् जलम् आनयति। सः जलेन वृक्षान् च सिञ्चति। यदा फलानि पक्वानि भवन्ति तदा तानि वृक्षेभ्यः पतन्ति। सः उपवनात् फलानि आपणं नयति। जनाः तानि आपणात् गृहं नयन्ति।*

*इदम् एकं सुन्दरम् उद्यानम् अस्ति। यदा प्रातः सूर्यस्य प्रकाशः भवति, तदा प्रकाशेन उद्यानस्य शोभा भवति। भ्रमराः कुसुमानाम् उपरि गुञ्जन्ति। कोकिलाः वृक्षाणाम् उपरि कूजन्ति। संजीवस्य माता उद्यानं रक्षति पादपान् सिंचति च।*

*प्रातःकाले वयम् उद्यानं गच्छामः। उद्याने जनाः विचरन्ति। उद्याने वटः आम्रः निम्बः अश्वत्थः अन्ये च अपि वृक्षाः सन्ति। खगाः वृक्षेषु निवसन्ति। वृक्षेषु पक्वानि फलानि सन्ति। लतासु कुसुमानि विकसन्ति। उद्याने एकः तडागः अपि अस्ति। जले कमलानि*

*विकसन्ति। कमलेषु भ्रमराः गुंजन्ति। तडागे मत्स्याः अपि सन्ति। सायंकाले बालकाः बालिकाः च उद्याने क्रीडन्ति। सम्प्रति वायु-प्रदूषणस्य दूरीकरणाय नगरे उद्यानम् आवश्यकम्।*

**शब्दार्थः**

***क्रीडाक्षेत्रम् = खेल का मैदान। वेगेन = तेज गति से। सहचरैः सह = मित्रों के साथ। उत्साहेन = खुशी से। शिक्षार्थं = शिक्षा के लिए। आपणम् = बाजार। बहिः = बाहर। पक्वानि = पके हुए। कोकिलाः = कोयलें। पादपान् = पौधों को। सिंचति = सींचती है। तडागः = तालाब। भ्रमराः = भँवरे। गुंजन्ति = गूँजते हैं। सम्प्रति = इस समय। अश्वत्थः = पीपल का वृक्ष। वट = बरगद। निम्बः = नीम।***

## *अभ्यासः*

### 1. *उच्चारणं कुरुत पुस्तिकायां च लिखत-*

***क्रीडाक्षेत्रम् ,शिक्षार्थं, गुंजनम्,उत्साहेन ,पुस्तिकाभ्यः ,अश्वत्थः,कुसुमानाम्, वृक्षेषु ,कूपात्, शिक्षार्थं, नेत्राभ्याम्***

**2. *एकपदेन उत्तरत-***

(*क*) ***बालकाः केन क्रीडन्ति***?

(*ख*) ***छात्राः किमर्थं विद्यालयं गच्छन्ति*** ?

(ग) ***फलानि केभ्यः पतन्ति***?

(घ) ***प्रातः कस्य प्रकाशः भवति***?

(ङ) ***भ्रमराः कुत्र गुजन्ति।*** ?

**3 . *मञ्जूषातः पदानि चित्वा वाक्यानि पूरयत-***

(क) वयं बालकान् .......................... पश्यामः।

(ख) विद्यालयाः .......................... भवन्ति।

(ग) उपवनरक्षकः.......................... जलम् आनयति।

(घ) भ्रमराः.......................... उपरि गुजन्ति।

(ङ) खगाः .......................... निवसन्ति।

4. विभक्तिं वचनं च लिखत-

विभक्तिम् वचनम्

यथा- शिक्षायै चतुर्थी एकवचनम्

(क पुस्तिकाभ्यः ................. ................

(ख) वृक्षेषु ................. ...............

(ग) कुसुमानाम् ................. ...............

(घ) कन्दुकेन ................ ...............

(ङ) सहचरैः ................ ...............

5. कोष्ठकात् उचितपदानि चित्वा वाक्यानि पूरयत-

(क) वयं ...... चित्राणि पश्यामः। (नेत्राभ्याम्/नेत्रेण)

(ख) ते ........ विद्यालयं गच्छन्ति (शिक्षाभ्यः/शिक्षायै) .

(ग) जनाः .... आपणं आगच्छन्ति। (गृहेण/गृहात्)

(घ) भ्रमराः .........उपरि गुञ्जन्ति। (पुष्पेभ्यः/पुष्पाणाम्)

(ङ) ................................. पक्वानि फलानि सन्ति। (वृक्षेषु/वृक्षेण)

**6. रेखांकितशब्दानाम् विलोमं मञ्जूषायां लिखत-**

यथा- अत्र बालकाः दुःखेन धावन्ति।

(क) बालिकाः अपि उत्साहेन क्रीडन्ति।

(ख) बालकः मन्दस्वरेण गीतं गायति।

(ग) प्रातःकाले वयं उद्यानं गच्छामः।

विशेष- सह (साथ) पद के पहले 'तृतीया-विभक्ति' का प्रयोग होता है- सहचरैः सह खेलति।

-देने अर्थ में जिसे दिया जाये, उसमें 'चतुर्थी विभक्ति' होती है- छात्राय ज्ञानं ददाति।

- अलगाव में जो स्थिर रहे, उसमें 'पञ्चमी विभक्ति' होती है- वृक्षात् पत्राणि पतन्ति।

शिक्षण-सङ्केतः

क. पाठस्य अनुच्छेदानां छात्रैः पृथक्-पृथक् वाचनं कारयत।

ख. विभक्तयः, कारकाणि च परिशिष्टे भागे सन्ति, तेषाम् अभ्यासं कारयत।

ग. बालक शब्दस्य पठ् धातोः च रूपाणि परिशिष्टात् लेखयत।

स्मरणीयम्-

आज्ञां मानय

आज्ञां मानय मान्य-जनानाम्

*आज्ञां मानय पूज्य-जनानाम्।*

*आज्ञां मानय ज्येष्ठ-जनानाम्*

*आज्ञां मानय श्रेष्ठ-जनानाम्।*

*न कुरु विलम्बम्*

*न कुरु विलम्बं शौचे स्नाने*

*न कुरु विलम्बं भोजन-पाने।*

*न कुरु विलम्बं उषसि विहरणे*

*न कुरु विलम्बं विद्याग्रहणे।*

*अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः।*

## चतुर्थः पाठः

### उद्बोधनम

*मा कुरु दर्पम्, मा कुरु गर्वम्*

*मा भव मानी, मानय सर्वम्।*

*मा भज दैन्यम्, मा भज शोकम्*

*मुदितमना भव, मोदय लोकम्।* 1।

*मा वद मिथ्या, मा वद व्यर्थम्*

*न चल कुमार्गे, न कुर्वनर्थम्।*

*पाहि विपन्नम्, पालय दीनम्*

*लालय जननी-जनक-विहीनम्।* 2।

*तनयं पाठय तनयां पाठय*

*शिक्षय नीतिं दोषं वारय।*

*कुरूपकारम्, कृत्यमुदारम्*

*अपनय दूरे चित्तविकारम्।* 3।

*मा पिब किञ्चिद वस्तु निषिद्धम्*

*मा भज दुर्व्यसनं प्रतिषिद्धम्।*

*मा नय पलमपि व्यर्थं समयम्*

*कुरु जगदीश्वर-चिन्तनमभयम्* । 4।

**शब्दार्थः**

***मा** = मत, नहीं। **कुरु** = करो। **दर्पम्** = घमण्ड (अकड़)। **गर्वम्** = अभिमान। **भव** = हो। **मानी** = अभिमान करने वाला। **मानय** = सम्मान दो। **भज** = रखो। **दैन्यम्** = दीनता। **मुदितमना** = प्रसन्न मन। **मोदय** = प्रसन्न करो। **वद** = बोलो। **मिथ्या** = झूठ। **व्यर्थम्** = बेकार। **अनर्थम्** = बुरा। **पाहि** = रक्षा करो। **विपन्नम्** = दुःखी। **लालय** = लालन-पालन करो। **विहीनम्** = रहित को। **तनयम्** = पुत्र को। **तनयां** = पुत्री को। **पाठय** = पढ़ाओ। **वारय** = दूर करो। **कृत्यम्** = कार्य। **चित्तविकारम्** = मन के दोष को। **अपनय** = हटाओ। **दुर्व्यसनम्** = खराब आदत।*

**अभ्यासः**

1. *दर्पं मा कुरु। गर्वं मा कुरु। मानी मा भव। सर्वं मानय। दैन्यं मा भज। शोकं मा भज। मुदितमना भव। लोकं मोदय।*

2. *मिथ्या मा वद। व्यर्थं मा वद। कुमार्गे न चल। अनर्थं न कुरु। विपन्नं पाहि। दीनं पालय। जननी- जनकविहीनं लालय।*

3. *तनयं पाठय। तनयां पाठय। नीतिं शिक्षय। दोषं वारय। उदारं कृत्यम्। उपकारं कुरु। चित्तविकारं दूरे अपनय।*

4. *निषिद्धं किञ्चिद वस्तु मा पिब। प्रतिषिद्धम् दुर्व्यसनं मा भज। पलम् अपि समयं व्यर्थं मा नय। अभयं जगदीश्वर-चिन्तनं कुरु।*

1. *एकपदेन उत्तरत-*

(*क*) ***कं पालय*** ? (*ख*) ***किं शिक्षय*** ?

(*ग*) ***किं अपनय*** ? (*घ*) ***किं मा पिब*** ?

2. *त्याज्यकार्याणां करणीयकार्याणां च सूचीं लिखत-*

*त्याज्यकार्याणि करणीयकार्याणि*

*यथा- असत्यभाषणम् यथा- उपकारम्*

...............................

...............................

...............................

3. *चित्रानुसारं वाक्यानि रचयत-*

............

...............

..........

.................

4. *पाठात् क्रियापदानि चित्वा स्वपुस्तिकायां लिखत-*

*यथा- कुरु* ........... ............ ............. ........... ..............

5. *कवितां पूरयत-*

(*क*) *मा भज दैन्यम्* .........................।

....................................... *लोकम्*।

(*ख*) ............................................*व्यर्थम्*।

.................................... *न कुरु अनर्थम्*।

(*ग*) ............. *पाठय* ...............*पाठय*।

...................................... *कृत्यमुदारम्*।

(*घ*) *मा पिब* .............................................।

........................................ *प्रतिषिद्धम्*।

**6-** ***विभिक्तं वचनं च लिखत-***

***लोकम्, मार्गे, तनयाम्, जगदीश्वरः***

***ध्यातव्यम्-***

*आज्ञार्थं निवेदनस्य च कृते लोट्लकारस्य प्रयोगः भवति, यथा- कुरु (करो), मा वद(मत बोलो) गच्छतु (जाओ), पठन्तु (पढ़े)*।

***शिक्षण-सङ्केत***

1. *अस्य पाठस्य पद्यानां गायनं कारयत*।

2. *लोट्लकारस्य (आज्ञार्थकस्य) वाक्यानाम् अभ्यासं कारयत*।

# पञ्चमः पाठः

## मम विद्यालयः

उषा-चेतने। तव विद्यालयः कुत्रास्ति ?

चेतना-मम विद्यालयः अत्र एव नगरे अस्ति। तत्र एकः सुन्दरः पुस्तकालयः एकं विशालं क्रीडाङ.गणं च स्तः।

उषा-अस्तु। तव विद्यालयस्य पुस्तकालये कीदृशानि पुस्तकानि सन्ति ?

चेतना-मम विद्यालयस्य पुस्तकालये विविधानां विषयाणां पुस्तकानि सन्ति।

उषा-समीचीनम्। तव विद्यालये कति शिक्षकाः सन्ति ?

चेतना- मम विद्यालये पञ्चशिक्षकाः सन्ति। ते सर्वे महर्षितुल्याः,कर्तव्यपरायणा, शिष्यवत्सलाश्च सन्ति।

उषा-किं तत्र विद्यालयोद्यानमपि अस्ति ?

चेतना-एवम्। मम विद्यालये एकं सुन्दरम् उद्यानम् अस्ति। यत्र मनोहराणि पुष्पाणि विकसन्ति।

उषा- तव विद्यालये अन्यत् किमस्ति ?

चेतना- मम विद्यालये संगणककक्षः अपि अस्ति।

***उषा-समीचीनम्। तव वस्त्राणि तु नूतनानि दृश्यन्ते। कुतः स्वीकृतवती?***

***चेतना- किं त्वं न जानासि यत् मम विद्यालये सर्वेभ्यः छात्रेभ्यः निःशुल्कं पुस्तकं, स्यूतं, पादत्राणं, वस्त्राणि च दीयन्ते।***

***उषा- तर्हि बहु सम्यक्। एवं श्रूयते यत् तव विद्यालये मध्याह्न भोजनमपि लभ्यते?***

***चेतना-सत्यमुक्तं त्वया। मम विद्यालये प्रतिदिनं निःशुल्कं भोजनं लभ्यते। एतदर्थं एका पाकशाला अस्ति। तत्र धनेश्वरी सुशीला किशोरी चेति तिस्त्रः भोजन निर्माणं कुर्वन्ति।***

***उषा- बहूत्तमम्। तर्हि तव विद्यालयः उत्तमः।***

***चेतना-आम्। निश्चयेन मम विद्यालयः उत्तमः। मम विद्यालयस्य परीक्षाफलं प्रतिवर्षं श्रेष्ठं भवति। तत्र पठित्वा अहम् आत्मानं गर्वम् अनुभवामि।***

***उषा-सत्यम्। एवंविधाः विद्यालयाः एव देशस्य गौरवं वर्धयन्ति।***

***शब्दार्थः***

***कति = कितने। समीचीनम = बहुत अच्छा। क्रीडाङ्.गणम्= खेल का मैदान। संगणककक्षः =कम्प्यूटर कक्ष।नूतनानि =नयी। स्यूतः =स्कूल बैग। पादत्राणं = जूता। पादकोशः = मोजा। पाकशाला = रसोईघर। आत्मानम् = अपने को। एवं विधा =इस प्रकार। ते = तुम्हारे।वर्धयन्ति = बढ़ाते हैं।***

**अभ्यासः-पञ्चमः पाठः**

1. उच्चारणं कुरुत पुस्तिकायां च लिखत-

क्रीडाङ्.गणम्, शिष्यवत्सलाश्च, कर्त्तव्यपरायणाः, मनोहराणि, संगणकम्, बहूत्तमम्।

2.पूर्ण वाक्येन उत्तरत-

यथा- विद्यालये विशालं किम् अस्ति ? विद्यालये विशालं क्रीडाङ्.गणम्,अस्ति

(क) विद्यालये कति शिक्षकाः सन्ति ?

(ख उषा वस्त्राणि कुतः स्वीकृतवती ?

(ग) विद्यालये प्रतिदिनं किं लभ्यते ?

(घ) विद्यालयस्य प्रतिवर्षं परीक्षाफलं कथं भवति ?

3. सन्धिं कुरुत-

यथा- विद्या+ आलयः = विद्यालयः

धन +ईश्वरी = धनेश्वरी

कुत्र +अस्ति = .................

महा +ऋषिः =.................

पुस्तक+ आलयः =.................

विद्यालय+ उद्यानम = .................

ध्यातव्यम्- पढ़ा,देखा, किया था इत्यादि हिन्दी क्रियापदेभ्यः लङ्.लकारस्य प्रयोगः

*भवति। यथा- अपठत् अपश्यत् अकरोत् आसीत्-सः पाठम् अपठत् (उसने पाठ पढ़ा)*

***4-अधोलिखितानि वाक्यानि एकवचने परिवर्तयत-***

*लट्लकारः लट्लकारः*

*यथा- ते लेख् लिखन्ति। सः लेखं लिखति।*

*ते उद्यानं गच्छन्ति।* .................................

*वयं क्रीडाङ्.गणं गच्छामः।* .................................

*वयं प्रश्नं पृच्छामः।* .................................

*ते भोजनं कुर्वन्ति।* .................................

***5-मञ्जूषातः पदानि चित्वा वाक्यानि पूरयत-***

*पुस्तकालयः कुत्र, पुष्पाणि, उद्यानम्*

(*क*) *विद्यालयः*...............*अस्ति* ?

(*ख*) *तत्र एकः सुन्दरः*...............*अस्ति।*

(*ग*) *उद्याने मनोहराणि*.........*विकसन्ति।*

(*घ*) *विद्यालये सुन्दरम्*..........*अस्ति।*

***6-संस्कृत भाषायाम् अनुवादं कुरूत-***

*यथा- मैंने पाठ पढ़ा। अहं पाठम् अपठम्।*

(*क*) *उसने भोजन किया।*

(ख) *उन्होंने दूध पिया।*

(ग) *आप लोग घर गये।*

***7-मम प्रिय शिक्षकः उपरि वाक्यानि लिखत।***

***शिक्षण-सङ्.केत-कक्षायां छात्रः पाठानुरूपं शुद्धोच्चारणपूर्वकं संवाद कारयत।***

***स्मरणीयम्-***

***पञ्च विद्यार्थिलक्षणानि- काकचेष्टा, बकोध्यानम्, श्वानिद्रा, अल्पाहारी, गृहत्यागी।***

***तमसो मा ज्योतिर्गमय।***

## षष्ठः पाठः

### धरित्री रक्षत

इयं धरित्री। अस्माकं मातृस्वरूपा। धरातले नद्यः पर्वताः वनानि अपि सन्ति। सूर्यः,चन्द्रमा, पवनः, जलं प्रकृतिप्रदत्तानि सन्ति। इमानि अस्मान् पोषयन्ति।मनुष्यः स्वार्थवशात् प्राकृतिकसंसाधनानां दुरुपयोगं करोति। क्रमेण एतानि संसाधनानि विनष्टानि दुषितानि च भविष्यन्ति। अधुना विश्वस्य वर्धमाना जनसंख्या शोचनीया। जनानाम् निवासाय वनानि छित्वा भवनानि निर्मीयन्ते। वृक्षाः प्राणवायुं ददति। वृक्षाणां विनाशेन पर्यावरणं प्रदूषितं भवति। प्रकृतेः सौन्दर्यं विलुप्तं भवति। पर्यावरणस्य विकारेण विपत्तयः आयान्ति। अतः विपत्तीनां निवारणाय अस्माभिः वसुधायाः रक्षणं कर्तव्यम्। यदा वसुधा रक्षिता तदा मानवजीवनमपि सुरक्षितं भवति। सत्यमेवोक्तम्-

'माता भूमिः पुत्रोऽहं पृथिव्याः।'

### शब्दार्थः

प्रदत्तानि =प्रदान करती है। तत्सर्वम्= ये सभी। मातृस्वरुपा = माता के समान। स्वगर्भे = अपने अंदर। क्रियमाणः= करते हुए। विनष्टानि = समाप्त हो जाना। छित्वा= काटकर। अविचारितेन= बिना विचार किये हुए। गरीयसीत= बढ़कर।

पृथिव्याः=पृथिवी के। समापतन्ति= आ जाती हैं।

**अभ्यासः**

1. उच्चारणं कुरुत पुस्तिकायां च लिखत-

सर्वव्यापिनी, प्रदत्तानि, क्रियमाणः, समापतन्ति।

2. एकपदेन उत्तरत-

यथा- का अस्माकम् मातृस्वरूपा ? धरित्री

(क) धरातले कानि सन्ति ?

(ख) कस्याः सौन्दर्यं विलुप्तं भवति ?

(ग) शुद्धप्राणवायुं के ददति ?

(घ) विपत्तीनां निवारणाय कस्याः रक्षणम् आवश्यकम् ?

3. पूर्णवाक्येन उत्तरत-

यथा- पृथिव्याः अपरं नाम किम् ? पृथिव्याः अपरं नाम धरित्री।

(क) प्राकृतिकसंसाधनानां दुरुपयोगं कः करोति ?

(ख) पर्यावरणस्य महती हानिः कथं भवति ?

(ग) का सर्वथा वन्दनीया सेवनीया च ?

4. मञ्जूषातः उचितविशेषणशब्दान् चित्वा वाक्यानि पूरयत-

प्रदूषितम्, मातृस्वरूपा, जनसंख्या, रक्षणम्।

यथा- इयं अस्माकम् मातृस्वरूपा।

(क) अधुना विश्वस्य वर्धमाना.......................शोचनीया।

(ख) अस्माभिः वसुधायाः.......................................कर्तव्यम्।

(ग) वृक्षाणां विनाशेन पर्यावरणं.........................भवति।

**5.** चित्रानुसारं संस्कृतवाक्यानि रचयत-

उद्याने एकः आम्रवृक्षः अस्ति।

...............................

..............................

.............................

**6.**संस्कृत भाषायाम् अनुवादं कुरुत-

(क) यह पृथ्वी हमारी माता के समान है।

(ख) इस पृथ्वी को वसुधा भी कहते हें।

(ग) हम सूर्य से ऊर्जा पाते हैं।

(घ) माता और मातृभूमि स्वर्ग से भी बढ़कर हैं।

(ड.) हम सूर्य से ऊर्जा पाते हैं।

7-पाठात् शब्दं चित्वा स्वमित्रैः सह अन्त्याक्षरीं कुरुत-

यथा-प्रथम वर्ग   द्वितीय वर्ग

पवनः नद्यः

यदा दूषितानि

शिक्षण-सङ्केतः

1-इण्टरनेट माध्यमेन पृथिवीदिवसस्य विषये चर्चां कारयत।

2- अप्रैलमासस्य द्वाविंशतारिकायां 'विश्वपृथिवीदिवस' इति।

3-'वसुधां रक्षत, जीवनं रक्षत' इति सूक्तिवाक्येन स्वकल्पनया चित्रनिर्माणं कुरुत।

4- वसुधारक्षणं कथं भविष्यति इति विषये स्वविचारं हिन्दीभाषायां लिखत।

## एतदपि जानीत-

कुछ फलों के संस्कृत नाम-

| हिन्दी | संस्कृत |
|---|---|
| आम | आम्रम् |
| जामुन | जम्बूफलम् |
| फूँट | स्फुटी |
| अनार | दाडिमम् |
| कटहल | पनसम् |
| कन्द | कन्दः |
| शरीफा | सीताफलम् |
| सिंघाड़ा | शृङ्गाटकः |
| बेर | बदरी |
| केला | कदली फलम् |

- किशमिश क्षुद्रद्राक्षा
- इमली अम्लिका
- मूँगफली मण्डपी
- अमड़ा आम्रातकम्
- बादाम बादामम्
- आँवला आमलकम्
- खजूर खर्जूरम्
- निम्बू निम्बूकम्
- छुहाड़ा शुष्कखर्जूरम्
- दाख/मुनक्का द्राक्षा
- अखरोट अक्षोटकम्
- ककड़ी कर्कटी
- अंगूर द्राक्षा
- खरबूजा खर्बूजः
- सेव बदरम्,
- नारियल नारिकेलम्
- नाशपाती रुचिफलम्
- नारंगी नारंगम्

स्मरणीयम्-

स्वच्छं रक्ष

स्वच्छं रक्ष जलं जलपात्रम्

स्वच्छं रक्ष समस्तं गात्रम्।

स्वच्छं रक्ष सकल-परिधानम्

स्वच्छं रक्ष निवास-स्थानम्।

## सप्तमः पाठः

### विमानयानं रचयाम

राघव ! माधव ! सीते ! ललिते !

विमानयानं रचयाम।

नीले गगने विपुले विमले

वायुविहारं करवाम। 1।

उन्नतवृक्षं तुङ्.गं भवनं

क्रान्त्वाकाषं खलु याम।

कृत्वा हिमवन्तं सोपानं

चन्दिरलोकं प्रविषाम। 2।

षुक्रष्चन्द्रः सूर्यो गुरुरिति

*ग्रहान् हि सर्वान् गणयाम।*

*विविधाः सुन्दरताराष्चित्वा*

*मौक्तिकहारं रचयाम।* 3।

*अम्बुदमालाम् अम्बरभूशाम्*

*आदायैव हि प्रतियाम।*

*दुःखित-पीडित-कृशिकजनानां*

*गृहेशु हर्शं जनयाम।* 4।

**शब्दार्थः**

*विमानयानम् = हवाई जहाज रचयाम = निर्माण करते हैंविपुले = विस्तृत विमले = स्वच्छ। वायुविहारम = वायु विहार। करवाम= करें उन्नतवृक्षम् = उँचे पेड़ तुड्.गम्= उँचा क्रान्त्वाकाषं = आकाष को पार करके याम = चलें कृत्वा =करके हिमवन्तं = हिमालय को सोपानम् = सीढ़ी चन्दिरलोकम् = चन्द्रनलोक को प्रविषाम = प्रवेष करें शुक्रक्रश्चन्द्रः=शुक्र और चन्द्रमा सूर्योगुरुरिति = सूर्य और गुरु सुन्दरताराष्चित्वा = सुन्दर तारों को चुनकर मौक्तिकहारं = मोती का हार अम्बुदमालाम् = मेघमाला को अम्बरभूशाम् = आकाश की शोभा को आदाय = लेकर के प्रतियाम = लौटें दुःखित = दुःख से गणेशु = समूह में हर्षम =खुशी जनयाम = लाये।*

**अभ्यासः**

1. *उच्चारणं कुरुत पुस्तिकायां च लिखत-*

*विमानयानम् , वायुविहारम् , करवाम , उन्नतवृक्षम, तुड्.गम् , , क्रान्त्वाकाषम्, गणेशु सूर्योगुरुरिति, सुन्दरताष्चित्वा , अम्बुदमालाम् , अम्बरभूशाम्, जनयाम।*

2. *एकपदेन उत्तरत-*

*यथा- वयं किं रचयाम* ? *विमानयानम*

(*क*) *कीदृषे गगने वायुविहारं करवाम* ? ...........................

(*ख*) *वयं विमानेन कुत्र प्रविषाम* ? .........................

(*ग*) *वयं कीदृषं भवनं क्रान्त्वा आकाषं याम* ? ..........................

3. *पाठात् उचितपदं चित्वा रिक्तस्थानानि पूरयत-*

(*क*) *नीले गगने विपुले विमले*

*ख* ......................

(*ग*) *अम्बुदमालाम् अम्बरभूशाम्*

*घ* ................................................

4. *भिन्नवर्गस्य पदं चिनुत* - *भिन्नवर्गः*

*यथा-शु क्रः*, *वृक्षः*, *चन्द्रः*, *गुरुः*। *वृक्षः*

(*क*) *छात्रः*, *शिक्षकः*, *भिक्षुकः* ,*प्राचार्यः*। .....................................

(*ख*) *शुक्रः*, *कपोतः*, *वानरः*, *काकः*। .....................................

*(ग) पत्रम्, पुश्पम्, मित्रम् ,फलम्।* ....................................

*(घ) सिंहः, मयूरः, मण्डूकः गजः।* ....................................

*विमान*

5. *पर्यायपदानि योजयत-*

- *विमले    जलदः*
- *गगने    निर्मले*
- *सूर्यः    आकाशे*
- *चन्द्रः    दिवाकरः*
- *अम्बुदः    निशाकरः*

6. *पाठात् तुकान्त पदानि चिनुत।*

*यथा- विपुले    विमले*

................. .......................

................... .......................

................... .........................

*शिक्षणसङ्केतः-' विमानयानं रचयाम' इति गीतस्य छात्रेशु अभ्यासं कारयत।*

# अष्टमः पाठः

## शङ्कराचार्यः

केरलराज्यस्य पूर्णानदीतीरे एकः ग्रामः। ग्रामस्य नाम 'कालडी' अस्ति। 788 तमे वर्षे शङ्कराचार्यस्य जन्म अभवत्। अस्य पितुः नाम 'शिवगुरु' मातुः नाम 'आर्याम्बा' च आसीत्। शङ्करस्य बाल्यकाले एव शिवगुरु' दिवंगतः। अतः आर्याम्बा एव शङ्करस्य पालनम् अकरोत्। बाल्यकालात् एव सः अतीव प्रतिभासम्पन्नः आसीत्।एकदा शङ्करः स्नानाय नदीं प्राविशत्। तत्र एकः मकरः तं गृहीतवान्। सः उच्चैः आक्रोशत्। माता तत् श्रुत्वा नदीतटम् आगच्छत्। तदा शंकरः मातरम् अवदत्- "अम्ब! संन्यासग्रहणाय मह्यम् अनुमतिं देहि। तदा एव अहं मकरात् मुक्तः भविष्यामि।" आर्याम्बा शङ्करस्य संन्यासं न इच्छति स्म। किन्तु पुत्रस्य कष्टं दृष्टवा "यथा तुभ्यं रोचते तथा कुरु" इति अवदत्। सद्यः एव शङ्करः मकरात् मुक्तः अभवत्। संन्यासाय अनुमतिं लब्ध्वा शङ्कर गृहात् निरगच्छत्। अष्टवर्षीयः सः ओंकारेश्वरक्षेत्रे आचार्यगोविन्दपादात् ज्ञानं प्राप्तवान्। द्वादशवर्षीयः शङ्करः सम्पूर्णदेशस्य पर्यटनं कृत्वा काशीं प्राप्तवान्। षोडशवर्षे सः ब्रह्मसूत्रस्य भाष्यं लिखितवान्।

*आदिशङ्कर विविधानि मधुराणि स्तोत्रकाव्यानि अपि रचितवान्। अकरोत्। सः धर्मरक्षार्थं देशस्य चतुर्दिक्षु चतुरः मठान्सं स्थापितवान्। केवलं द्वात्रिंशे एव वयसि शङ्कराचार्यः ब्रह्मभावम् उपगतः। आदिशङ्कराचार्यः भारतवर्षस्य ऐक्यसाधने किञ्च सनातनधर्मस्य प्रतिष्ठायां सर्वदा स्मरणीयः विद्यते।*

**शब्दार्थः**

*दिवंगतः = मृत्यु हो गयी पूर्णानदी तीरे =पूर्णनदी के तट पर प्राविशत =प्रवेश किए आक्रोशत्= चिल्लाये श्रुत्वा =सुनकर सद्यः= तुरन्त, शीघ्र लब्ध्वा = प्राप्त करके प्राप्तवान् = प्राप्त किये निरगच्छत् = निकल गए संस्थापितवान् = संस्थापित किये द्वात्रिंशे वयसि = बत्तीसवें वर्ष में।*

**अभ्यासः**

1. *उच्चारणं कुरुत पुस्तिकायां च लिखत-*

*आदिशङ्कराचार्यः, आर्याम्बा, पूर्णानदीतीरे, उपनिषदादिभाष्याणि,आक्रोशत्, ओंकारेश्वरक्षेत्र, स्तोत्रकाव्यानि, बाल्यकालात्।*

2. *यथायोग्यं योजयत-*

*यथा- मातरम् अलिखत्*

*भाष्यम् अगच्छत्*

*ज्ञानम् अकरोत्*

*प्रचारम् अलभत्*

जन्म प्राप्नोत्

नदीम् अवदत्

3. एकपदेन उत्तरत-

यथा- कालडीग्रामः कस्मिन् राज्ये अस्ति ? केरलराज्ये

(क) शङ्करस्य पिता कदा दिवंगतः ? ........................

(ग) माता पुत्रं केन गृहीतम् अपश्यत् ? .........................

(घ) शङ्करः कस्य पर्यटनं कृत्वा काशीं प्राप्तवान् ? ........................

(ड.) सम्पूर्णभारतवर्षे शड्करः कस्य प्रचारम् अकरोत् ? ..........................

4. सन्धि-विच्छेदं कुरुत-

पदम् सन्धि-विच्छेदः

यथा- शङ्कराचार्यः =शङ्कर + आचार्यः

सर्वोदयः ..................................

ओंकारेश्वरम् .................................

5.वाक्यानि रचयत-

पूर्णानदीतीरे,

शङ्करस्य,

सन्यासाय,

*धर्मरक्षार्थम्,*

**6.** ***रेखांकितपदानि आधृत्य प्रश्ननिर्माणं कुरुत-***

*यथा- शङ्करस्य पितुः शिवगुरुः आसीत्। शङ्करस्य पितुः कः आसीत्?*

(क) *आचार्यशङ्करः बाल्यकालादेव प्रतिभासम्पन्नः आसीत्।*

(ख) *मातुः अनुमतिं लब्ध्वा शङ्करः गृहात् निरगच्छत्।*

(ग) *धर्मरक्षार्थं देशस्य चतुर्दिक्षु चतुरः मठान् संस्थापितवान्।*

**7.** ***अधोलिखितानि वाक्यानि घटनाक्रमेण पुस्तिकायां लिखत-***

(क) *द्वादशवर्षीयः शङ्करः सम्पूर्णदेशस्य पर्यटनं कृत्वा काशीं प्राप्तवान्।*

(ख) *केवलं द्वात्रिंशे एव वयसि शङ्कराचार्यः ब्रह्मभावम् उपगतः।*

(ग) 788 *तमे वर्षे शङ्कराचार्यस्य जन्म अभवत्।*

(घ) *अष्टवर्षीयः सः ओंकारेश्वरक्षेत्रे आचार्यगोविन्दपादात् ज्ञानं प्राप्तवान्।*

***शिक्षण-सङ्केतः- कस्यापि महापुरुषस्य जीवनचरितं दशवाक्येषु लेखयत***

***एतदपि जानीत-***

- ***भारतीयसंस्कृतौ चत्वारः आश्रमाः-***

1. *ब्रह्मचर्याश्रमः।*
2. *गृहस्थाश्रमः।*
3. *वानप्रस्थाश्रमः।*

4. ***संन्यासाश्रमः***।

***स्मरणीयम्-शङ्कराचार्यः चतुरः मठान् संस्थापयत्। एते मठाः-***

- ***दिशा स्थानम् मठः***
- ***पूर्व जगन्नाथपुरी गोवर्धनमठः***
- ***पश्चिम द्वारिका शारदामठः***
- ***उत्तर बद्रीनाथः ज्योतिर्मठः***
- ***दक्षिण रामेश्वरम् श्रृंगेरीमठः***

***गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः।***

## नवमः पाठः

### नीलश्रृगालः

*कस्मिंश्चिद् अरण्ये एकः श्रृगालः प्रतिवसति स्म। स एकदा स्वेच्छया नगरोपान्ते भ्रमन् कुक्कुरेभ्यो भीतः रजकस्य नीलभाण्डे पतितः। ततोऽसौ वनं गत्वा आत्मानं नीलवर्णमवलोक्य अचिन्तयत्- अहम् इदानीम् उत्तमवर्णः, तदाहं स्वकीयोत्कर्षं किं न साधयामि? इत्यालोच्य श्रृगालान् आहूय स उक्तवान्-'मां भगवती वनदेवता स्वहस्तेन अरण्यराज्ये अभिषिक्तवती। तदद्यारभ्य अरण्ये अस्मदाज्ञया व्यवहारः कार्यः। श्रृगालाश्च तं विशिष्टवर्णम् अवलोक्य प्रणम्य अवदन्- 'यथा आज्ञापयति देव! इत्यनेनैव सर्वे क्रमेण अरण्यवासिनः तस्य आधिपत्यं स्वीकृतवन्तः।शनैः शनैः स व्याघ्र-सिंहादीन् उत्तमजनान् प्राप्य स्वजातीयान् दूरीकृतवान्। ततो दुःखितान् श्रृगालान् अवलोक्य केनचिद् वृद्धश्रृगालेन एतत्प्रतिज्ञातम्- यथा अयं व्याघ्रादिभिः परिचितो भवेत् तथा उपायं करिष्यामः। यतः एते व्याघ्रादयः अस्य वर्णमात्रेण विप्रलब्धाः सन्तः एनं श्रृगालम् अज्ञात्वा राजानं मन्यन्ते। ततः सायंकाले सर्वे तत्र सम्मिल्य एकदैव महारावम् अकुर्वन्। तं शब्दं श्रुत्वा स नीलश्रृगालोऽपि जातिस्वभावात् तैः सह शब्दम् अकरोत्। तथा कृते सति सिंहैः स ज्ञातः हतश्च। यतः-*

*यः स्वभावो हि यस्यास्ति स नित्यं दुरतिक्रमः।*

**शब्दार्थः**

*कस्मिंश्चिद् = किसी अरण्ये = जंगल में भ्रमन् = घूमता हुआ भीतः = डरा हुआ रजकस्य = कपड़ा धोने वाले के नीलभाण्डे = नील के हौज (नाद) में। नगरोपान्ते = शहर के समीप आत्मानम् = अपने शरीर को उत्तमवर्णः = अच्छे रंग का स्वकीयोत्कर्षम् = अपनी उन्नति (लाभ) को साधयामि = सिद्ध करूँ। आलोच्य = विचार करके आहूय = बुलाकर अभिषिक्तवती = अभिषेक किया है आधिपत्यम् = अधीनता शनैः-शनैः = धीरे धीरे केनचिद् = किसी के द्वारा। यतः = क्योंकि विप्रलब्धाः = ठगे गये (वंचित) सम्मिल्य = मिलकर एकदैव = एक साथ महारावम् = ऊँची आवाज शब्दम् = आवाज दुरतिक्रमः = दुर्निवार, जिसका निवारण कठिन हो।*

**श्लोकार्थ-जिसका जो स्वभाव होता है, उसका निवारण कठिन है।**

1. *उच्चारणं कुरुत पुस्तिकायां च लिखत-*

*कस्ंिमश्चिद,स्वेच्छया, कुक्कुरेभ्यः, स्वकीयोत्कर्षम्,अभिषिक्तवती,अस्मदाज्ञया,व्याघ्रादिभिः,सम्मिल्य,यस्यास्ति, इत्यनेनैव, व्याघ्रादयः।*

2. *एकपदेन उत्तरत-*

   (क) *शृगालः कुत्र वसति स्म?*

   (ख) *तस्य आधिपत्यं के स्वीकृतवन्तः?*

   (ग) *सर्वे शृगालाः सायंकाले किम् अकुर्वन्?*

   (घ) *सिंहः कं हतवान्?*

3. *एकवाक्येन उत्तरत-*

   (क) *नीलवर्णः शृगालः किम् अचिन्तयत्?*

(ख) वृद्धशृगालेन किं प्रतिज्ञातम् ?

(ग) नीलवर्णः शृगालः किम् उक्तवान् ?

4. मञ्जूषातः पदानि चित्वा रिक्तस्थानानि पूरयत-

पतितः, शृगालः , दुरतिक्रमः, वनदेवता।

(क) कस्मिंश्चिद् अरण्ये एकः ........ वसति स्म।

(ख) स रजकस्य नीलभाण्डे ...........।

(ग) भगवती ........ स्वहस्तेन अरण्यराज्ये अभिषिक्तवती।

(घ) य स्वभावो हि यस्यास्ति स नित्यम् ....।

5. वाक्यानि रचयत-

प्रतिवसति स्म, महारावम्, शनैः-शनैः, नीलभाण्डे

6. संस्कृतभाषायाम् अनुवादं कुरुत-

(क) एक बार वह नील के पात्र में गिर गया।

(ख) सभी वनवासियों ने उसका आधिपत्य स्वीकार कर लिया।

(ग) सभी ऊँची आवाज करने लगे।

7.हिन्दीभाषायाम् अस्याः कथायाः अनुवादं कृत्वा पुस्तिकायां लिखत।

शिक्षण-सङ्केतः

1. पाठसदृशीम् अन्यां कथां श्रावयत।

## दशमः पाठः

### प्रहेलिकाः

*वने वसति को वीरो योऽस्थि-मांस-विवर्जितः।*

*असिवत् कुरुते कार्यं कार्यं कृत्वा वनं गतः* । 1।

*न तस्यादिः न तस्यान्तः मध्ये यः तस्य तिष्ठति।*

*तवाप्यस्ति ममाप्यस्ति यदि जानासि तद् वद*। 2।

*एकचक्षुर्न काकोऽयं बिलमिच्छन् न पन्नगः।*

*क्षीयते वर्धते चैव न समुद्रो न चन्द्रमाः*। 3।

*प्रकाशः शीतलः यस्य यः कलाभिः च वर्धते।*

*तापं हरति सर्वेषां चकोरस्य प्रियः स कः*। 4।

*वृक्षाग्रवासी न च पक्षिराजः*

*त्रिनेत्रधारी न च शूलपाणिः।*

*त्वग्वस्त्रधारी न च सिद्धयोगी*

*जलं च बिभ्रन्न घटो न मेघः*। 5 ।

**शब्दार्थः**

***वने = जंगल में, जल में अस्थि = हड्डी असिवत् = तलवार की भाँति न = न अक्षर तस्य = उस पद के आदिः = आरम्भ में तस्यान्तः = उसके अन्त में मध्ये = बीच में तव अपि अस्ति = तुम्हारे पास भी है एकचक्षुः = एक आँख वाला पन्नगः = साँप क्षीयते = घटता है कलाभिः च वर्धते = कलाओं से बढ़ता है चकोरस्य = चकोर का सः कः? = वह कौन है? वृक्षाग्रवासी = वृक्ष के अगले हिस्से पर रहता हैपक्षिराजः = पक्षियों का राजात्रिनेत्रधारी = तीन आँखों वालाशूलपाणिः = भगवान शङ्करत्वग्-वस्त्रधारी = छाल, (वल्कल) वस्त्र वाला बिभ्रन् = भरा हुआ न घटः = (वह) घड़ा नही है न मेघः = (वह) बादल नहीं है***

***अन्वयः***

(1) ***कः वीरः वने वसति, यः अस्थि-मांस-विवर्जितः (अस्ति) असिवत् कार्यं कुरुते, कार्यं कृत्वा वनं गतः।***

(2) ***तस्य आदिः 'न' (वर्णः) तस्यान्तः 'न' (वर्णः) तस्य मध्ये 'य' (वर्णः) तिष्ठति। तव अपि अस्ति, मम अपि***

***अस्ति, यदि जानासि तद् वद।***

(3) ***एकचक्षुः (अस्ति परन्तु) अयं न काकः, बिलम् इच्छन् न पन्नगः, य क्षीयते वर्धते च एव (परन्तु सः) न समुद्रः चन्द्रमा अस्ति।***

(4) ***यस्य प्रकाशः शीतलः (अस्ति), यः कलाभिः च वर्धते। सर्वेषां तापं हरति, यः चकोरस्य प्रियः (अस्ति), सः कः अस्ति ?***

(5) ***वृक्षाग्रवासी (अस्ति), न च पक्षिराजः। त्रिनेत्रधारी (अस्ति परं) न च शूलपाणिः। त्वग्वस्त्रधारी (अस्ति परं)***

***न च सिद्धयोगी (अस्ति)। जलं च बिभ्रन् (अस्ति परं) न घटः न वा मेघः अस्ति।***

**अभ्यासः**

1. *उच्चारणं कुरुत पुस्तिकायां च लिखत-*

*योऽस्थि, विवर्जितः, तवाप्यस्ति,ममाप्यस्ति, एकचक्षुर्न, बिलमिच्छन्,वृक्षाग्रवासी, त्वग्वस्त्रधारी, बिभ्रन्न।*

2. *पूर्णवाक्येन उत्तरत -*

*यथा-कः वीरः असिवत् कार्यं करोति ? कुम्भकारस्य तन्तु*

(*क*) *यस्य आदौ 'न' अस्ति तथा अन्ते 'न' अस्ति एवं मध्ये 'य' अस्ति, सः कः अस्ति?*

(*ख*) *यस्य प्रकाशः शीतलः अस्ति तथा च कलाभिः वर्धते, सः कः अस्ति?*

(*ग*) *कः वृक्षाग्रवासी अस्ति परं पक्षिराजः नास्ति?*

3. *मञ्जूषातः समानार्थक-पदानि चित्वा लिखत-*

*नीरम्, जलधिः, शशिः, घनः, नेत्रम्।*

*यथा- समुद्रः - जलधिः*

*चन्द्रः* - ..................

*मेघः* - ..................

*जलम्* - ..................

*चक्षुः* - ..................

4. *विलोमपदानि परस्परं योजयत-*

वीरः आगतः

गतः तप्तः

प्रकाशः अप्रियः

शीतलः कायरः

प्रियः अन्धकारः

5. सन्धि-विच्छेदं कुरुत -

पदम् सन्धि-विच्छेदः

तस्यान्तः ...................................

चैव ..........................................

वृक्षाग्रवासी ..............................

6. पाठात् क्रियापदानि चित्वा लिखत-

यथा- वसति- .......... .......... .......... ............. ...........

7-वाक्यानि पूरयत-

(क) प्रकाशः शीतलः यस्य यः ..........च वर्धते।

(ख) .................. न च पक्षिराजः।

शिक्षण संड्.केत-

(क) छात्रैः समानार्थकानाम् अन्यहिन्दी-प्रहेलिकानां संग्रहं कारयत।

(*ख*) *प्रहेलिकायाः उत्तराणि*-1 *कुम्भकारस्य तन्तु* (*कुम्भकार का डोरा*),

2 *नयनम्* (*नयन*), 3 *सूचिका-तन्तुः* (*सूई-डोरा*),

4 *चन्द्रः* (*चन्द्रमा*), 5 *नारिकेलः* (*नारियल*)

*मनोरञ्जनाय*

*हास्यं सुध्युपास्यम्* (*चुटकुला*)

*एकः शिक्षकः पत्रं लिखित्वा कस्यचिद् छात्रस्य गृहम् प्रेषितवान् छात्रस्य च पितरं प्रतिवेदनम् अकरोत्। अन्येद्युः पिता आगत्य अध्यापकम् अपृच्छत्-किमेतत्पत्रं भवतैव लिखितम्? अध्यापकः- आम्। पिता-तर्हि अस्मिन् पत्रे किं लिखितम्, पठित्वा कथयतु। अस्पष्टलिपिकारणात् अध्यापकः अतीव कठिनतया पत्रम् अपठत् अवदत् च-अस्मिन् पत्रे भवते इदमेव प्रतिवेदितं यत् भवतः बालस्य लिपिः समीचीना नास्ति।*

*भावार्थ- एक अध्यापक ने किसी लड़के के घर पर पत्र लिखकर भेजा और लड़के के पिता से शिकायत की। दूसरे दिन पिता ने अध्यापक से पूछा - क्या यह पत्र आपने ही लिखा है ? अध्यापक- हाँ। पिता- तो इस पत्र में पढ़कर तो बताइए क्या लिखा है? लिखावट ठीक नहीं थी, अतः अध्यापक ने बड़ी मुश्किल से पढ़ा और कहा कि इस पत्र में आपको यही शिकायत लिखकर भेजी गयी है कि आपके लड़के की लिखावट बहुत खराब है।*

## एकादशः पाठः

### गणतन्त्रदिवस-समारोहः

*प्रभाकरः- मित्र जैकब! श्वः गणतन्त्रदिवसस्य समारोहः भविष्यति। तस्य दर्शनाय वयं गमिष्यामः। सलीमः ह्यः माम् अवदत् यत् सः अपि तत्र गमिष्यति। किं त्वमपि तत्र चलिष्यसि?*

*जैकबः-मित्र! गणतन्त्रदिवसस्य समारोहः किमर्थं भवति?*

*प्रभाकरः- अहो! किं त्वं न जानासि यत् प्रथमगणतन्त्रदिवसाद् एव स्वतन्त्रभारतस्य स्वकीयं नवीनं संविधानम् आरब्धमासीत्।*

*जैकबः- गणतन्त्रदिवसस्य आरम्भः कदा अभवत्?*

*प्रभाकरः- अद्यैव तु अस्माकम् अध्यापकः गणतन्त्रविषये अवदत् यत्* 26.01.1950 *ईसवीये वर्षे प्रथम-गणतन्त्रदिवसस्य समारोहः अभवत्।*

*जैकबः- अयं समारोहः कुत्र भविष्यति, तथा च तत्र किं भविष्यति ?*

*प्रभाकरः- अयं समारोहः सम्पूर्णे देशे आयोजितो भविष्यति। विद्यालयेषु, यन्त्रालयेषु, कार्यालयेषु च ध्वजारोहणं भवति। विद्यालयेषु बालकाः क्रीडाङ्गणेषु सोत्साहं खेलिष्यन्ति। ततः शिक्षकाः सर्वेभ्यः मोदकं वितरिष्यन्ति।*

*जैकबः-भारतस्य राजधान्यां दिल्लीनगर्यां श्वः किं किं भविष्यति?*

*प्रभाकरः- तत्र भारतद्वारम् इत् िस्थाने राष्ट्रपतिः राष्ट्रं सम्बोधयिष्यति। तदनन्तरं भारतीय-सैनिकाः विभिन्नेषु समूहेषु तस्य सम्मुखम् आगत्य तस्याभिनन्दनं करिष्यन्ति।*

*जैकबः-गणतन्त्रदिवस-समारोहे अन्यत् किं किं भवति?*

*प्रभाकरः- विभिन्नेभ्यः राज्येभ्यः जनाः अस्य समारोहस्य दर्शनाय तत्र गच्छन्ति। स्व-स्वराज्यस्य कलाकृतीरपि प्रदर्शयितुं तत्र नयन्ति।*

*जैकबः- किं दिल्लीवासिनः एव भारतद्वारं यान्ति?*

*प्रभाकरः- नैव, नैव, सर्वेऽपि भारतीयाः सम्मिलिताः भवितुं शक्नुवन्ति। एषः समारोहः सम्पूर्णस्य राष्ट्रस्यास्ति।*

*जैकबः- तर्हि अहमपि तत्र सम्मिलितः भविष्यामि। स्वमित्रं हमीदमपि तत्र नेष्यामि।*

*प्रभाकरः- शोभनम्, अतिशोभनम्।*

**शब्दार्थः**

*श्वः=कल (आने वाला) ह्यः=कल(बीता हुआ) स्वकीयम्=अपना आरब्धम् = प्रारम्भ हुआ अद्यैव=आज ही कुत्र=क हाँ भविष्यति=हो गा यन्त्रालयेषु=कारखानों मे क्रीडाङ्गणेषु=खेल के मैदान में भारतद्वारस्य=भारतद्वार(इंडिया गेट) के सम्बोधयिष्यति=सम्बोधित करेंगे शोभनम्=सुन्दर नेष्यन्ति=ले जाएंगे*

**अभ्यासः**

1. *उच्चारणं कुरुत पुस्तिकायां च लिखत-*

*आरब्धमासीत् , अद्यैव,तस्याभिनन्दनम्, कलाकृतीरपि।*

**2. एकपदेन उत्तरत -**

(क) ***गणतन्त्रदिवसे समारोहः कदा भवति*** ?

(ख) ***गणतन्त्रदिवसे कः राष्ट्रं सम्बोधयति*** ?

(ग) ***अस्माकं देशस्य राजधानी का अस्ति*** ?

**3. पूर्णवाक्येन उत्तरत -**

(क) ***गणतन्त्रदिवसस्य समारोहः किमर्थं भवति*** ?

(ख) ***गणतन्त्र-दिवससमारोहस्य आरम्भः कदा अभवत्*** ?

(ग) ***गणतन्त्र-दिवसे किं किं भवति*** ?

**4. मञ्जूषातः उचितपदानि चित्वा वाक्यानि पूरयत-**

***श्वः, ह्यः, अधुना, अद्य***

***यथा-अहम् ...ह्यः..गीताम् अपठम्।***

(क) ***त्वम्*** ....................... ***कुत्र गमिष्यसि*** ?

(ख) ..................... ***गणतन्त्र-दिवसस्य उत्सवः अस्ति।***

(ग) ........................ ***देशः स्वतन्त्रः अस्ति।***

***विशेषः***

***भविष्यत् काल की क्रिया बनाने के लिए धातु के 'लृट्' लकार के रूपों का प्रयोग किया जाता है*** ,

***एकवचनम् द्विवचनम् बहुवचनम्***

*.सः गमिष्यति तौ गमिष्यतः ते गमिष्यन्ति*

(*वह जायेगा*) (*वे दोनों जायेंगे*) (*वे सब जायेंगे*)

*त्वं गमिष्यसि युवां गमिष्यथः यूयं गमिष्यथ*

(*तुम जाओगे*) (*तुम दोनों जाओगे*) (*तुम सब जाओगे*)

*अहं गमिष्यामि आवां गमिष्यावः वयं गमिष्यामः*

(*मैं जाऊँगा*) (*हम दोनों जायेंगे*) (*हम सब जायेंगंे*)

*ऊपर ध्यान से देखें तो ज्ञात होता है कि 'गम्' धातु के लृट् लकार के प्रथम पुरुष के एकवचन, द्विवचन और बहुवचन में क्रमशः गम्-इष्यति=गमिष्यति, गम्-इष्यतः=गमिष्यतः, गम्-इष्यन्ति=गमिष्यन्ति आदि प्रत्ययों को जोड़ते हैं। इसी प्रकार मध्यम तथा उत्तम पुरुष के रूप में भी अन्य प्रत्यय जुड़ते हैं, यथा-*

*एकवचनम् द्विवचनम् बहुवचनम्*

*गम्-इष्यसि=गमिष्यसि गम्-इष्यथः=गमिष्यथः गम्-इष्यथ=गमिष्यथ*

*एकवचनम् द्विवचनम् बहुवचनम्*

*गम्-इष्यामि=गमिष्यामि गम्-इष्यावः=गमिष्यावः गम्-इष्यामः=गमिष्यामः*

5. *अधोलिखित क्रियापदानां धातुं लकारं पुरुषं वचनं च लिखत-*

*क्रियापदम्, धातुः, लकारः, पुरुषः, वचनम्।*

*यथा-गमिष्यति गम् लृट्लकारः प्रथम-पुरुषः एकवचनम्*

*भविष्यति* ...... .................. ............ ................

*पठिष्यति* ...... .................. ............. ................ *नेष्यन्ति* ...... .................. ............. ...............

**6.** ***चित्र-निर्माणं कुरुत -***

***राष्ट्रियध्वजः, राष्ट्रियपक्षी, राष्ट्रियपुष्पम्।***

***7-अधोलिखित पदानि प्रयुज्य वाक्यरचनां कुरुत-***

***यथा-समारोहः - श्वः गणतंत्रदिवसस्य समारोहः भविष्यति।***

***अध्यापकः, ध्वजारोहणम्, भारतीयाः***

***जननी जन्मभूमिश्च स्वर्गादपि गरीयसी।***

## द्वादशः पाठः

### चन्द्रशेखरः आजादः

"तव किं नाम अस्ति?"

"आजादः।"

"कस्तव पिता?

"स्वाभिमानः।"

"क्व निवासस्थानम्?"

'कारागारः'। न्यायाधीशस्य प्रश्नानाम् एतादृशानि उत्तराणि भारतस्य परतन्त्रताकाले यः अयच्छत् सः आसीत् चन्द्रशेखरः 'आजादः'।

संस्कृतस्य एव छात्रः, नाम्ना चन्द्रशेखरः तदानीं वाराणस्यां पठति स्म। एकादशवर्षदेशीयः अयं यदा 'जलियावाला'- काण्डस्य नृशंसताम् अशृणोत् तदा एव प्रतिज्ञाम् अकरोत् 'येन केनापि प्रकारेण इदं क्रूरशासनम् उन्मूलनीयम्' इति।

शीघ्रमेव सः कालः आगतः। भारते ब्रिटिशयुवराजः आगच्छत्। शासनेन तस्य सत्काराय आयोजनं कृतम्। तस्य बहिष्काराय भारतीयाः जनाः निश्चयम् अकुर्वन्। वाराणस्यां क्वींसकालेज इति नाम्ना ख्यातस्य संस्कृतविद्यालयस्य प्राङ्गणे आजादः

*बहिष्कारान्दोलनं समचालयत्। तदा अल्पवयस्कमपि एतं राजपुरुषाः कारागारे अपातयन्। कतिपयदिनानन्तरं च तं न्यायालयम् आनयन्। न्यायाधीशः तं प पञ्चदशवर्षीयं बालकं तथाविधोत्तरदानेन उद्दण्डं ज्ञात्वा क्रूरतया दण्डितवान्- "पञ्चदशवारं वेत्रदण्डेन ताडयित्वा कारागारात् निष्कासय इति।"*

*वेत्रप्रहारकः तं निर्वस्त्रं कृत्वा तस्य पृष्ठदेशं तथा निर्दयम् प्रहृतवान् यथा तस्य पृष्ठचर्म उच्छिन्नम् अभवत्। सः प्रतिवेत्रघातं 'भारत-माता जयतु' इति नादं तावद् अकरोत् यावत् किल सः मूर्च्छितः नाभवत्।*

*साइमन-समितेः बहिष्कारकाले वयोवृद्धं लालालाजपतरायं गौराङ्गाः तथा अताडयन् यथा स कतिपयैरेव दिनैः पञ्चत्वम् अगच्छत्। तस्य प्रतिशोधाय प्रवृत्ताः आजादः, भगतसिंहः, शिवरामः, राजगुरुः, जयगोपालश्च-इमे सर्वे लालालाजपतरायस्य मृत्योः मुख्यं कारणं गौराङ्गं सैन्डर्स-नामानम् अमारयन्।*

*आजादः* 1931 *तमे वर्षे फरवरी मासस्य सप्तविंशे दिनाङ्के पूर्वाह्णे दशवादनसमये प्रयागस्य अल्फ्रेड-वाटिकायां सुखदेवराजेन सह उपविष्टः आसीत्। तदा नाट-बावरेण सह अन्ये राजपुरुषाः तं सर्वतः आक्रामन्। नाट-बावरस्य भुशुण्डीगुलिका आजादस्य जङ्घायां प्रविष्टा। आजाद-प्रक्षिप्ता च गुलिका बावरस्य हस्तं भित्वा बहिर्गता। घटिकैकं यावद् उभयतः गुटिकावृष्टिः अभवत्। एकतः एकः आजादः अन्यतः च बहवः शत्रवः। यदा गुलिका समाप्तप्रायाः अभवन् तदा आजादः अन्तिमया गुटिकया आत्मानं हत्वा स्वकीयम् 'आजाद' इति नाम सार्थकम्् अकरोत्। एवं च सः स्वातन्त्र्ययज्ञकुण्डे स्वप्राणानाम् आहुतिं कृत्वा वीरगतिं प्राप्नोत्।*

## शब्दार्थः

*अयच्छत्=दि या तदानीम्=उस समय एकादशवर्षदेशीयः=लगभग ग्यारह वर्ष का नृशंसताम्=क्रूरता को (निर्दयता को) उन्मूलनीयम्=जड़ से उखाड़ देना चाहिए समचालयत्=स चालित किया अल्पवयस्कः=कम उम्र के कारागारे=जेल में वेत्रदण्डेन=बेंत के डण्डे से तथाविध=उस प्रकार के वेत्रप्रहारकः=बेंत से प्रहार करने वा ला प्रहृतवान्=पीटा गया उच्छिन्नम्=उ ख ड़ ना घटिका=घ ण्टा तावत्=तबतक*

*पंचत्वम्=मृत्यु को गौराङ्गः=अंग्रेज सप्तविंशे दिनाङ्के=सत्ताईसवीं तारीख में भुशुण्डीगुलिका=बन्दूक की गोली।*

**अभ्यासः**

**1.*उच्चारणं कुरुत पुस्तिकायां च लिखत-***

*एकादशवर्षदेशीयः,कतिपयदिनान्तरम्, अल्पवयस्कमपि ,स्वातन्त्र्ययज्ञकुण्डे,बहिष्काराम्दोलनम्,गुटिकावृष्टिः।*

**2.*एकपदेन उत्तरत-***

*यथा-आजादस्य पूर्णं नाम किम्?* *चन्द्रशेखरः आजादः*

(*क*) *कस्य स्वागतस्य बहिष्काराय जनाः निश्चयम् अकुर्वन्?*

(*ख*) *वेत्रप्रहारकाले आजादः किम् उदघोषयत्?*

(*ग*) *अल्फ्रेड-वाटिका कस्मिन् नगरे अस्ति?*

**3.*पूर्णवाक्येन उत्तरत-***

(*क*) *कदा वयोवृद्धं लालालाजपतरायं गौराङ्गाः अताडयन्?*

(*ख*) *कस्य प्राङ्गणे आजादः बहिष्कारान्दोलनं समचालयत्?*

(*ग*) *लालालाजपतरायस्य मृत्योः मुख्यं कारणं सैन्डर्स-नामानम् गौराङ्गं के अमारयन्?*

(*घ*) *'कस्तव पिता?' इति प्रश्नस्य उत्तरं किम् अयच्छत्?*

**4.*अधोलिखित-क्रियापदानां लकारं लिखत-***

क्रियापदम्  लकारः

यथा-पठन्ति  लट्

आसीत्  ............

गच्छेत्  ............

अभवत्  ............

5.उदाहरणानुसारं लकारपरिवर्तनं कुरुत-

लङ्लकारः  लट्लकारः

अयच्छत्  यच्छति

अश्रृणोत्  ...................

आगच्छत्  ......................

अमारयन्  ....................

6. संस्कृतभाषायाम् अनुवादं कुरुत-

(क) स्वतंत्रता दिवस पन्द्रह अगस्त को मनाया जाता है।

(ख) स्वतंत्रता संग्राम में अनेक राष्ट्रभक्तों ने प्राणों की आहुति दी।

(ग) चन्द्रशेखर आजाद संस्कृत विषय के छात्र थे।

(घ) हमारा देश पन्द्रह अगस्त सन् 1947 ई0 को स्वतंत्र हुआ।

(ङ) देश में संविधान 26 जनवरी सन् 1950 ई0 को लागू किया गया।

7. *मेलनं कुरुत-*

*यथा-*

- *गणतंत्र दिवसः -दिसम्बर-मासस्य सप्त-दिनाङ्के*
- *स्वतंत्रता दिवसः -जनवरी-मासस्य षड्विंश-दिनाङ्के*
- *महात्मागान्धी जन्मदिवसः- अगस्त-मासस्य पञ्चदश-दिनाङ्क*
- *झण्डा-दिवसः-अक्टूबर-मासस्य द्वितीय-दिनाङ्के*

*शिक्षण-सङ्केतः*

*देशभक्तानां सत्प्रयासेनैव अस्माकं देशः स्वतन्त्रः जातः। कक्षायाम् अस्य विस्तृतं ज्ञानंददतु।*

*स्मरणीयम्-*

*अहं वीरबालः अहं वीरबालः*

*अहं मातृभक्तः अहं पितृभक्तः*

*अहं लोकसेवा-व्रती देशभक्तः।*

*अहं दीनबन्धुः अहं हीनबन्धुः*

*अहं पीडितानां महास्नेहसिन्धुः।*

*अहं वीरबालः*

*यशः पुण्यैरवाप्यते।*

# त्रयोदशः पाठः

## काकः

एकः काकः तृषापीडितः

जलं नालभत दूरे दूरे।

वृक्षाद् वृक्षं गतः वराकः

ग्रामे ग्रामे नगरे नगरे। 1 ।

एकं सहसा घटं दृष्टवान्

घटे जलं दृष्टं बहुदूरे।

खण्डं खण्डं पाषाणानां

क्षिप्तवान् काकः जलमध्ये। 2।

घटकण्ठं सम्प्राप्तं नीरं

पीत्वा सन्तुष्टः खलु काकः।

बुद्धिपूर्वकं यत्नं कुरुते

*वद न सफलतां लभते का? कः? । 3।*

***शब्दार्थः***

*काकः=कौआ तृषापीडितः=प्यास से व्याकुल न अलभत=नहीं पाया वृक्षात्=वृक्ष से (पेड़ से) वराकः=बेचारा,सहसा=अचानक (एकाएक)खण्डम्=टुकड़ा। पाषाणानाम्=पत्थरों के क्षिप्तवान्=डाला दृष्टवान्=देखा का=कौन (स्त्री) कः=कौन (पुरुष)।*

*अन्वयः*

(1) *एकः तृषापीडितः काकः दूरे-दूरे जलं न अलभत।*

(*सः*) *वराकः वृक्षाद् वृक्षं गतः, ग्रामे ग्रामे नगरे नगरे* (*गतः*)।

(2) (*सः*) *सहसा एकं घटं दृष्टवान्। घटे जलं बहुदूरे दृष्टम्।*

*काकः पाषाणानां खण्डं खण्डं जलमध्ये क्षिप्तवान्।*

(3) *नीरं घटकण्ठं सम्प्राप्तम्। काकः* (*तत्*) *पीत्वा सन्तुष्टः।*

*बुद्धिपूर्वकं यत्नं कुरुते का कः सफलतां न लभते?*

***अभ्यासः***

**1.** ***उच्चारणं कुरुत पुस्तिकायां च लिखत-***

*तृषापीडितः, वृक्षाद्,् पाषाणानाम्,*

*दृष्टवान्, क्षिप्तवान्, सन्तुष्टः,*

*सम्प्राप्तम्, बुद्धिपूर्वकम्, नालभत।*

2. एकपदेन उत्तरत-

यथा- तृषापीडितः कः आसीत्? काकः

(क) सः दूरे दूरे किं न अलभत?

(ख) वृक्षात् वृक्षं कः गतवान्?

(ग) घटे बहुदूरे किं दृष्टम्?

(घ) काकः पाषाणखण्डान् कुत्र अक्षिपत्?

3. मञ्जूषातः पदानि चित्वा वाक्यानि पूरयत-

एकः, नालभत, दृष्टम्, अक्षिपत्, घटम्, जलम्।

यथा- एकः काकः तृषापीडितः।

(क) जलं दूरे दूरे.................................... ।

(ख) एकं सहसा................................. दृष्टवान् ।

(ग) घटे जलं बहुदूरे .................................... ।

(घ) स काकः जलमध्ये पाषाणखण्डम् ......................।

(ङ.) काकः .......................... पीत्वा सन्तुष्टः जातः।

4. संस्कृते अनुवादं कुरुत-

(क) एक कौआ प्यास से व्याकुल था।

(ख) वह जल के लिए वृक्ष से वृक्ष पर गया।

(ग) सहसा उसे एक घड़ा दिखायी पड़ा।

(घ) घड़े में पानी बहुत दूर था।

(ङ) उसने घड़े में पत्थर के टुकड़े डाले।

5. चित्राणि दृष्ट्वा वाक्यानि रचयत-

यथा- एकः मयूरः अस्ति।

...........................................

...............................

..........................

..................

**6.** ***उचितम् उत्तरपदं रेखांकितं कुरुत-***

***यथा- तृषापीडितः कः आसीत्*** ? (***काकः***, ***वानरः***, ***गजः***)।

(***क***) ***दूरे दूरे किं नालभत*** ? (***अन्नम्***, ***दुग्धम्***, ***जलम्***)।

(***ख***) ***वृक्षाद् वृक्षं कः गतः*** ? (***मयूरः***, ***उलूकः***, ***काकः***)।

(***ग***) ***काकः सहसा किं दृष्टवान्*** ? (***शरावम्***, ***घटम्***, ***कटाहम्***)।

(***घ***) ***काकः घटे किं क्षिप्तवान्*** ? (***पाषाणखण्डम्***, ***अन्नम्***, ***जलम्***)।

**7.** ***सप्तमीविभक्तिकपदानि चित्वा लिखत-***

***यथा- ग्रामे***, .......................................... ............................................

.......................................... ..............................................,

***शिक्षण-सङ्केतः***

## चतुर्दशः पाठः

### रक्षाबन्धनम्

रक्षाबन्धनं पर्व श्रावणमासस्य पूर्णिमायां तिथौ भवति। अस्यां तिथौ भगिन्यः स्वानुजानां अग्रजानाञ्च दक्षिणहस्तेषु रक्षासूत्राणि बध्नन्ति। भगिन्यः भ्रातारं छात्राः छात्रं देशस्य नागरिकाः सैनिकान् रक्षासूत्रं निबद्धय परस्परं रक्षितुं संकल्पवन्तः भवन्ति।अस्मिन् दिने या कापि कन्या यस्य कस्यापि पुरुषस्य हस्ते रक्षासूत्रं बध्नातिए सः पुरुषः तां प्रति भ्रातृवत् व्यवहारं करोति।

भारतस्य मध्यकालिके इतिहासे रक्षाबन्धनस्य महत्त्वविषये एकः दृष्टान्तः मिलति। चित्तौडनगरस्य हिन्दूराज्ञी कर्मवती हुमायँूनामकं मुसलमानशासकं स्वभ्रातरं मत्वा तस्य पाश्र्वे रक्षासूत्रं प्रेषितवती। सः सम्राट् रक्षासूत्रं स्वीकृत्य तस्याः सम्मानरक्षाम् अकरोत्। गुजरातनरेशेन सह युद्धे चित्तौडनगरस्य सहायताम् अकरोत्। रक्षाबन्धनदिवसे एव उपाकर्मसंस्कारस्यापि विधानमस्ति। एतदर्थं धार्मिकाः जनाः पुरोहितेन सह नदीतटं पवित्रं सरोवरं वा गच्छन्ति। तत्र आवर्षं कृतानि निषिद्धकार्याणि अनुस्मरन्तिए पुनश्च तानि असत्कार्याणि न भवेयुः इति प्रायश्चित्तं कुर्वन्तिए ओषधीनाम् अनुलेपनं कृत्वा जले बहुवारं स्नानं च कुर्वन्ति। अस्य महत्त्वं ज्ञात्वा भारतशासनेन अयं दिवसः ष्संस्कृतदिवसष् .रूपेणोद्घोषितः अस्ति। यतः संस्कृतं सम्पूर्णं देशं एकतायाः सूत्रे बध्नाति।पूर्णिमायां तिथौत्रपूर्णिमा तिथि को।

स्वानुजानाम्त्रअपने छोटे भाइयों के। अग्रजःत्रपहले जन्मे हुए। बध्नन्तित्रबाँधते हैं। या कापित्रजो कोई। यस्य कस्यापित्रजिस किसी के। भ्रातृभावस्यत्रभाई सरीखे भाव का। आवर्षम्त्रवर्ष भर ;पूरे सालद्ध। निषिद्धकार्याणित्रन किये जाने वाले कर्मों को ;निषिद्धत्रजिनको नहीं किया जाना चाहिएद्ध। अनुस्मरन्तित्रयाद करते हैं। प्रायश्चित्तम्त्रकिये गये निषिद्ध कर्मों का परिशोधन। अनुलेपनम्त्रबाद में लेपन करना। असत्कार्याणित्रअनुचित कार्य। खलुत्रनिश्चय ही । संस्कृतदिवसरूपेणोद्घोषितःत्र संस्कृत.दिवस के रूप में घोषित।

**अभ्यासः**

उच्चारणं कुरुत पुस्तिकायां च लिखत.

श्रावणमासस्य ,पूर्णिमायाम्,उपाकर्मसंस्कारस्यापि,निषिद्धकार्याणि ,अनुस्मरन्ति ,उद्घोषितः

एकपदेन उत्तरत.

क-रक्षाबन्धनं पर्व श्रावणमासस्य कस्यां तिथौ भवतिघ्

ख-श्रावणीपर्वणि हिन्दुजनाः केषां पूजनं कुर्वन्तिघ्

ग-भगिन्यः स्वानुजानाम् अग्रजानाञ्च दक्षिणहस्तेषु कानि बध्नन्तिघ्

घ-हिन्दूराज्ञी कर्मवती कस्य पाश्र्वे रक्षासूत्रं प्रेषितवतीघ्

पूर्णवाक्येन उत्तरत.

क हुमायूँ.सम्राट् रक्षासूत्रं स्वीकृत्य किम् अकरोत्घ्

ख रक्षाबन्धन.दिवसे एव कस्य संस्कारस्य विधानमस्तिघ्

ग भारतशासनेन अयं दिवसः केन रूपेणोद्घोषितःघ्

घ रक्षाबन्धनदिवसे कस्याः भाषायाः दिवसो भवतिघ्

अधोलिखित-क्रियापदानाम्, धातुम्, लकारम्, पुरुषम्, वचनं च लिखत-

क्रियापदम् धातुः लकारः पुरुषः वचनम् यथा- कुर्वन्ति कृ लट् प्रथम पु0 बहुवचनम्

अकरोत् ......... ............ ............... ....................

गच्छन्ति ......... ............ ............... ....................

भवेयुः ......... ............ ............... ....................

अधोलिखितपदानां विभक्तिं वचनं च लिखत-

पदम् विभक्तिः वचनम्

यथा- भारतस्य षष्ठी एकवचनम्

इतिहासे ................. .........................

पुरोहितेन ................. .........................

बालिका ................. .........................

ओषधीनाम् ................. .........................

प्रतीकात्मकचिह्नानाम् आधारे पर्वणां नामानि तत्सम्बद्धे वाक्ये लिखत-

................

.

..............

***स्मरणीयम्***

***त्रिवादनम्***

***पंचाधिकत्रिवादनम्***

***सपादचतुर्वादनम्***

***दशाधिकत्रिवादनम्***

***सार्धचतुर्वादनम्***

***पादोनपंचवादनम्***

***चत्वारिंशद्-अधिकत्रिवादनम्***

***पंचन्यूनत्रिवादनम्***

***शिक्षण-सङ्केतः***

***बालकैः अस्य पाठस्य सारांशं लघुसमूहेषु लेखयत रक्षाबन्धनेन सम्बन्धितकवितानांसंकलनं च कारयत।***

***एतदपि जानीत-***

***'उत्तरप्रदेशसंस्कृतसंस्थानम्' लखनऊनगरे अस्ति।***

***किं किं न साधयति कल्पलतेव विद्या***

# पञ्चदशः पाठः

## नीतिश्लोकाः

*अक्रोधेन जयेत्क्रोधम् असाधुं साधुना जयेत्।*

*जयेत्कदर्यं दानेन जयेत्सत्येन चानृतम्* । 1।

*गच्छन् पिपीलिको याति योजनानां शतान्यपि।*

*अगच्छन् वैनतेयोऽपि पदमेकं न गच्छति* । 2।

*दिनान्ते च पिबेद् दुग्धं निशान्ते च पिबेत् पयः।*

*भोजनान्ते पिबेत् तक्रं किम् वैद्यस्य प्रयोजनम्।* 3।

*षड्दोषाः पुरुषेणेह हातव्याः भूतिमिच्छता।*

*निद्रा तन्द्रा भयं क्रोधः आलस्यं दीर्घसूत्रता* । 4।

*निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु*

*लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम्।* ।

*अद्यैव वा मरणमस्तु युगान्तरे वा*

*न्याय्यात् पथः प्रविचलन्ति पदं न धीराः* । 5।

## शब्दार्थः

*जयेत् = जीते। कदर्यम् = कृपणता को। अनृतम् =झूठ को। पिपीलिकः = नर चींटी। वैनतेयः = गरुड़ (तेज उड़ने वाला पक्षी, विनता का पुत्र)। दिनान्ते = दिन के अन्त में (सायं काल)। निशान्ते = रात के अन्त में। पयः = जल। तक्रम् = मट्ठा। हातव्या = छोड़ देना चाहिए। भूतिमिच्छता = सम्पत्ति, ऐश्वर्य चाहने वाले। तन्द्रा = जागते हुए सोना। दीर्घसूत्रता = धीरे-धीरे कार्य करना। आलस्यम् = शिथिलता (सुस्ती)। निन्दन्तु = निन्दा करें। स्तुवन्तु = प्रशंसा करें। नीतिनिपुणाः=नीति में कुशल लोग। समाविशतु = आये। यथेष्टम् = इच्छानुसार। अद्यैव = आज ही। अस्तु = होवे (हो जाय)। युगान्तरे = युगों के बाद। वा = अथवा। प्रविचलन्ति = विचलित होते हैं। धीराः = धैर्यवान लोग।*

***अन्वयः***

(1) *क्रोधम् अक्रोधेन जयेत्, असाधुं साधुना जयेत्, कदर्यं दानेन जयेत्, अनृतं च सत्येन जयेत्।*

(2) *गच्छन् पिपीलिकः योजनानां शतानि अपि याति। अगच्छन् वैनतेयः अपि एकं पदं न गच्छति।*

(3) *दिनान्ते दुग्धं पिबेत्, निशान्ते पयः पिबेत्, भोजनान्ते तक्रं पिबेत्, वैद्यस्य किं प्रयोजनम्। (किमपि प्रयोजनं नास्ति)।*

**6.*पाठात् वाक्यानि पूरयत-***

*(क) गच्छन् पिपीलिको याति योजनानां शतान्यपि।*

.........................................................................................।

*(ख) निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु।*

........................................................................................।

**7.*विलोम-पदानि लिखत-***

यथा- क्रोधेन - अक्रोधेन

साधु - ........................

सत्यम् - ........................

भयम् - ........................

दिनान्ते - ........................

शिक्षण-सङ्केतः

(क) श्लोकानां सामूहिकं पाठं कारयत।

(ख) अन्येषां नीतिश्लोकानां बोधं कारयत।

एतदपि जानीत-

कुछ अन्नों के नाम संस्कृत में-

गेहूँ गोधूमः

उड़द माषः

जव यवः

सरसों सर्षपः

अरहर आढकी

मकई मकायः

चना चणकः

मसूर मसूरः

मटर करेणुः

धान धान्यम्

नहि कृतमुपकारं साधवो विस्मरन्ति।

## षोडशः पाठः

### अहिंसायाः जयः

*पुरा कोशलदेशे एकः भीषणः दस्युः अवसत्। तस्य नाम अङ्गुलिमालः आसीत्। लोकानां लुण्ठनं हननं च तस्य दैनिकं कृत्यम्। असौ यान् हन्ति स्म, तेषाम् अङ्गुलीः छित्त्वा ताभिः मालां विरच्य कण्ठे अधारयत्। अतः तस्य 'अङ्गुलिमाल' इति नाम्ना ख्यातिः जाता।अङ्गुलिमालस्य दुष्कृत्यैः प्रजाऽतीव दुःखिता आसीत्। राजा प्रसेनजितोऽप्यस्य क्रूरकृत्येन भृशं कष्टं प्राप्नोत्। राजा तस्य निग्रहणे बहु प्रायतत, सैन्यबलं च प्रैषयत् परं साफल्यं नालभत।भगवतो बुद्धस्य शिष्यः*

*प्रसेनजितः तद्विषये बुद्धं न्यवेदयत्।बुद्धस्तदानीम् अङ्गुलिमालस्य समक्षं धर्ममुपदेष्टुं गतः परं सः बुद्धमवलोक्य क्रूरतया हन्तुम् अधावत्। बुद्धः स्वतपोबलेन ज्ञानं प्राकाशयत्। बुद्धस्य करुणार्द्रभावं विलोक्य स चकितोऽभूत् तथा बुद्‌धस्य समक्षमवनतोऽभवत्। बुद्धस्तदा धर्मस्य परहितस्य प्रेम्णः करुणायाश्च शिक्षां तं अपाठयत्।बुद्धस्य उपदेशप्रभावाद् अङ्गुलिमालस्य अज्ञानान्धकारः नष्टः। सः अङ्गुलीनां मालां छित्त्वा खड्गं प्राक्षिपत्। सः परपीडनं हिंसां च परित्यज्य दयाभावं प्राप्नोत्। बुद्धस्य सः शिष्यः अभवत्। एवं हिंसायाम् अहिंसाया विजयोऽभवत्।*

### शब्दार्थः

*पुरा=प्राचीन काल में। भीषणः=भयङ्कर। दस्युः=डाकू। लोकानाम्=जनता का। असौ=व ह । लुण्ठनम्=लू ट ना । हन्तिस्म=मारता था। यान्=जिनक । अङ्गुलीः=अङ्गुलियों को। छित्त्वा=काटकर। विरच्य=बनाकर। अधारयत्=पहन लिया। भृशम्=अतिशय। निग्रहणे=पकड़ने में। प्रायतत=प्रयास किया। प्रैषयत्=भेजा। नालभत=नहीं प्राप्त किया। न्यवेदयत्=निवेदन किया। उपदेष्टुम्=उपदेश देने हेतु। हन्तुमधावत्=मारने के लिए दौड़ा। प्राकाशयत्=प्रकाशित किया। अवनतोऽभूत्=झुक गया। परपीडनम्=दूसरों को सताना। प्राक्षिपत्=फेंक दिया। हिंसायाम्=हिंसा पर।*

**1.** *उच्चारणं कुरुत पुस्तिकायां च लिखत-*

*अहिंसैव, प्रजाऽतीव, प्रैषयत्,*

*न्यवेदयत्, बुद्धस्तदानीम्, धर्ममुपदेष्टुम्।*

**2.** *एकपदेन उत्तरत-*

(*क*) *कोशलदेशे कः दस्युः आसीत्?*

(**ख**) *अङ्गुलिमालस्य दुष्कृत्यैः के दुःखिताः आसन्* ?

(**ग**) *कस्य उपदेशप्रभावाद् अङ्गुलिमालस्य अज्ञानान्धकारः नष्टः अभवत्* ?

(**घ**) *अङ्गुलिमालः हिंसां परित्यज्य कं भावं प्राप्नोत्* ?

**3.** *वाक्यानि पूरयत-*

(*क*) *लोकानाम्* ................................ *कृत्यम्।*

(**ख**) *बुद्धस्तदा* ................................ **चाददात्।**

(**ग**) *बुद्धस्य* .................................. **नष्टः।**

(घ) सः परपीडनम् .............................. प्राप्नोत्।

*ध्यातव्यम्*

*खाकर, पढ़कर, आकर, देकर इति पदानां कृते धातुना सह क्त्वा (त्वा) ल्यप् (य) प्रत्ययौ*

*योजयित्वा खादित्वा, पठित्वा, आगत्य, आदाय पदानि च रचयामः। वाक्ये- 'प्रवीणः रोटिकां*

*खादित्वा विद्यालयं गच्छति' प्रयोगः भवति।*

4. *मञ्जूषातः पदानि चित्वा वाक्यानि पूरयत-*

*नीत्वा, पठित्वा, दृष्ट्वा, श्रुत्वा, त्यक्त्वा, पीत्वा।*

(क) *रमा विद्यालयात्* ................................ *आगच्छति।*

(ख) *वाहिदः चित्रं* ................................ *हसति।*

(ग) *बालकः कथां* .................................. *शेते।*

(घ) *मोहनः दुग्धं* ...............................*क्रीडति।*

(ङ) *पक्षिणः तृणं* ................................ *उत्पतन्ति।*

(च) *वयं दुर्गुणान्* ................................ *सन्मार्गे चलामः।*

*अभ्यासः*

5. *सन्धिविच्छेदं कुरुत-*

*पदम् सन्धिविच्छेदः*

*यथा-प्रजातीव =प्रजा + अतीव*

*अज्ञानान्धकारः* ............... + ................

*करुणार्द्रभावम्* ................ + ................

*बुद्धस्तदा* ................ +...............

**6-** *पाठात् क्रियापदानि चित्वा लिखत-*

*यथा- आसीत्* ........ ........ .........

......... ........ .........

*शिक्षण-सङ्केतः*

1. *अहिंसया हिंसां जेतुं शक्नुमः एतद् विषये छात्रान् बोधयत।*

2. *अङ्गुलिमालस्य विषये उक्ता इयं कथा बौद्धजातकाद् गृहीता अस्ति।*

*बौद्धजातके एतादृश्यः अन्याः कथाः अपि सन्ति इति छात्रान् बोधयत।*

3. *शिक्षकः कक्षायाम् अस्य पाठस्य अभिनयं कारयेत्।*

*एतदपि जानीत-*

*अस्माकं राष्ट्रीयचिह्ने अंकितवाक्यं 'सत्यमेव जयते' मुण्डकोपनिषदात् गृहीतम्।*

## सप्तदशः पाठः

### प्रयाण-गीतम्

पदं पदं प्रवर्धते

किशोरगुल्मसैनिकः।

जयत्व-कामनायुतः

विजेतृगीतगायकः। 1।

स्वतन्त्रता-प्रवर्तकः

स्वतन्त्रदेशरक्षकः।

स्वतन्त्रता-सुवर्ण-जन्य-

वर्ण-मोद-वर्धकः। पदं पदं प्रवर्धते। 2।

अशोक-चक्रशोभितः,

करे ध्वजः त्रिवर्णिकः।

*हृदि प्रतापवीरता,*

*अदम्यसाहसान्वितः। पदं पदं प्रवर्धते।* 3।

*न मार्गरोधने क्षमाः,*

*समुद्रपर्वतादिकाः।*

*समस्तवैरिनाशकः,*

*यथा सुवीरसायकः। पदं पदं प्रवर्धते।* 4।

***शब्दार्थः***

*गुल्म=सैन्य दल। विजेतृ=विजेता। मोद=प्रसन्नता। त्रिवर्णिकः=तीनवर्णों वाला, तिरङ्गा। अदम्य=जिसका दमन न किया जा सके। साहसान्वित=साहसयुक्त, साहसी। रोधने=रोकने में। सुवीरसायकः=अच्छे वीरों के बाण। प्रतापवीरता=राणाप्रताप की वीरता। स्वतन्त्रता-सुवर्ण-जन्य-वर्ण-मोद-वर्धकः =स्वतन्त्रता रूपी स्वर्ण से उत्पन्न स्वर्णिम आनन्द को बढ़ाने वाला। प्रवर्धते=आगे बढ़ रहा है। क्षमाः=समर्थ।*

*अन्वयः*

(1) *जयत्व-कामनायुतः विजेतृगीतगायकः किशोरगुल्मसैनिकः पदं पदं प्रवर्धते।*

(2) *स्वतन्त्रताप्रवर्तकः स्वतन्त्रदेशरक्षकः स्वतन्त्रता-सुवर्ण-जन्य-वर्ण-मोद-वर्धकः (पदं पदं प्रवर्धते)*

(3) *अशोकचक्रशोभितः त्रिवर्णिकः ध्वजः(यस्य)करे, प्रतापवीरता(यस्य) हृदि, अदम्यसाहसान्वितः(सः) पदं पदं प्रवर्धते।*

(4) *समुद्रपर्वतादिकाः(यस्य) मार्गरोधने न क्षमाः,(यः) सुवीर-सायकः यथा*

*समस्तवैरिनाशकः*, (*सः*) *पदं पदं प्रवर्धते*।

***अभ्यासः***

**1.** ***उच्चारणं कुरुत पुस्तिकायां च लिखत-***

*विजेतृ*, *गीतगायकः*, *त्रिवर्णिकः*,

*समस्तवैरिनाशकः* , *अदम्यसाहसान्वितः*, *प्रवर्धते*।

**2.** ***एकपदेन उत्तरत-***

(*क*) *कः पदं पदं प्रवर्धते*?

(*ख*) *ध्वजः कीदृशः अस्ति*?

(*ग*) *के मार्गरोधने क्षमाः न सन्ति*?

(*घ*) *किशोरगुल्मसैनिकः कः इव समस्तवैरिनाशकः अस्ति*?

**3.** ***वाक्यानि पूरयत-***

(*क*) *किशोरगुल्म-* .............................।

(*ख*) *विजेतृगीत-* .............................।

(*ग*) *स्वतन्त्रदेश-* ..............................।

(*घ*) *वर्णमोद-* .............................।

**4.** ***अधोलिखित-पदानां विलोमपदानि लिखत-***

*यथा- स्वतन्त्रता - परतन्त्रता*

*रक्षकः* - .....................

*क्षमाः* - .....................

*वीरता* - .....................

5. *हिन्दीभाषायाम् अनुवादं कुरुत-*

(*क*) *भारतीय ध्वज में अशोक चक्र सुशोभित है।*

(*ख*) *राष्ट्रीय ध्वज में तीन रंग हैं।*

(*ग*) *राष्ट्रसैनिकों की जय हो।*

6. *अधोलिखित-पदानां विभक्तिं वचनं च लिखत-*

*पदम् विभक्तिः वचनम्*

*यथा- देशेन तृतीया एकवचनम्*

*किशोरान्* ................ ....................

*अशोकस्य* ................ ....................

*शोभिते* ................ ....................

*चक्रात्* ................ ....................

7- *अधोलिखितानि पदानि प्रयुज्य वाक्यरचनां कुरुत-*

*सैनिकः, गायकः, रक्षकः, ध्वजः।*

*शिक्षण-सङ्केतः*

(क) *अस्य पाठस्य सर्वेषां पद्यानां सैन्यगीतस्य ध्वनौ गानस्य अभ्यासं कारयत।*

(ख) *राष्ट्रस्य विषये दश वाक्यानि लेखयत।*

***एतदपि जानीत-***

***भारतीयसंस्कृतौ चत्वारः पुरुषार्थाः भवन्ति -***

***धर्म-अर्थ-काम-मोक्ष च।***

# परिशिष्टम्

**व्याकरणम्**

**वर्णपरिचय**

संस्कृत भाषा में वर्ण दो प्रकार के होते हैं - स्वर और व्यञ्जन - इन्हें क्रमशः अच् और हल् भी कहते हैं -

अ इ उ ऋ लृ -- ह्रस्व

आ ई ऊ ॠ -- दीर्घ साधारण स्वर

ए ऐ ओ औ -- दीर्घ -- संयुक्त स्वर

व्यञ्जन

क ख ग घ ङ = क वर्ग

च छ ज झ ´ = च वर्ग

ट ठ ड ढ ण = ट वर्ग स्पर्श वर्ण

त थ द ध न = त

वर्ग

प फ ब भ म = पवर्ग

*य र ल व अन्तःस्थवर्ण*

*श ष स ह ऊष्मवर्ण*

*क् + ष = क्ष*

*त् + र = त्र संयुक्ताक्षर*

*ज् + ञ = ज्ञ*

*श् + र = श्र*

*उपर्युक्त सभी व्यञ्जन वर्णों में 'अ' का संयोग है। अ के बिना इनका स्वरूप होगा - क्, ख्, ग्, घ् इत्यादि। इस रूप को 'हल्' कहा जाता है तथा इसका संकेतक चिह्न ( ् ) है।*

*वाक्य में वर्णों के अतिरिक्त कुछ अन्य ध्वनि प्रतीकों का भी उपयोग किया जाता है जो वर्णमाला में सम्मिलित न होते हुए भी अर्थबोध में सहायक होते हैं, इन्हें अयोगवाह कहा जाता है, ये निम्नलिखित हैं।*

*अनुस्वार अं*

*विसर्ग अः* (: ) *अयोगवाह*

*चन्द्रबिन्दु अँ*

*चन्द्री* (*आगत ध्वनि*) *ऑ* ( ॅ )

*जिन वर्णों का उच्चारण मुख और नासिका के सहयोग से किया जाता है, उन्हें अनुनासिक कहते हैं। ङ, ञ, ण, न और म अनुनासिक वर्ण हैं। सभी स्वर दो प्रकार के होते हैं--*

*अनुनासिक और निरनुनासिक।*

## वर्णों का उच्चारण स्थान

| | |
|---|---|
| अ आ क ख ग घ ङ ह विसर्ग (ः) | कण्ठ |
| इ ई च छ ज झ ´ य श | तालु |
| ऋ ॠ ट ठ ड ढ ण र ष | मूर्धा |
| लृ त थ द ध न ल स | दन्त |
| उ ऊ प फ ब भ म | ओष्ठ |
| ए,ऐ | कण्ठतालु |
| ओ,औ | कण्ठोष्ठ |
| व | दन्तोष्ठ |

ङ, ´, ण, न और म का उच्चारण स्थान स्ववर्गीय स्थान + नासिका है।

## माहेश्वरसूत्र के अनुसार वर्णपरिचय

सन्धि-ज्ञान में प्रत्याहारों के ज्ञान की आवश्यकता होती है और प्रत्याहारों के ज्ञान के लिए माहेश्वर सूत्रों का ज्ञान आवश्यक है। अतः यहाँ माहेश्वर सूत्र दिये जा रहे हैं--

1. अ इ उ ण्

2. ऋ लृ क्

3. ए ओ ङ्

4. ऐ औ च्

5. *ह य व र ट्*

6. *ल ण्*

7. *´म ङ ण न म्*

8. *झ भ ´ञ्*

9. *घ ढ ध ष्*

10. *ज ब ग ड द श्*

11. *ख फ छ ठ थ च ट त व्*

12. *क प य्*

13. *श ष स र्*

14. *हल्* ।

*ये चौदह माहेश्वर सूत्र हैं। इनके अन्तिम वर्ण इत् कहलाते हैं। प्रत्याहार में इनकी गणना नहीं की जाती है। प्रत्याहार इस प्रकार हैं-*

*अक्* = *अ इ उ ऋ लृ*,

*एङ्*= *ए ओ*,

*एच्* = *ए ओ ऐ औ*,

*ऐच्* = *ऐ औ*,

*अच्*= *अ इ उ ऋ लृ ए ओ ऐ औ*,

*जश्* = *ज ब ग ड द इत्यादि* ।

***सन्धि***

***दो वर्णों के मेल को सन्धि कहते हैं। ये मुख्यतः तीन हैं--***

1. ***अच् सन्धि*** (***स्वर सन्धि*** ) 2. ***हल् सन्धि*** (***व्यञ्जन सन्धि***) 3. ***विसर्ग सन्धि***

***स्वर सन्धियाँ कई प्रकार की हैं। उनमें से दो यहाँ दी जा रही हैं--***

1. ***दीर्घ*** - (***अकः सवर्णे दीर्घः***) - ***अक्*** (***अ/आ, इ/ई, उ/ऊ, ऋ,/ॠ***) ***से सवर्ण*** (***समान अच्- अ/आ, इ/ई, उ/ऊ, ऋ/ॠ***) ***के बाद में रहने पर दोनांे के स्थान में दीर्घ होता है, जैसे***:-

***यथा- शब्द+अर्थः = शब्दार्थः। वात + आवरणम् = वातावरणम्।***

***विद्या + आलयः = विद्यालयः, विद्या + अर्थी = विद्यार्थी***

***रवि + इन्द्रः = रवीन्द्रः गिरि +ईशः = गिरीशः***

***मही + इन्द्र = महीन्द्रः श्री + ईशः = श्रीशः***

***गुरु + उपदेशः = गुरूपदेशः लघु + ऊर्मिः = लघूर्मिः***

***वधू + उत्सवः = वधूत्सवः भू + ऊर्जा = भूर्जा***

***पितृ + ऋणम् = पितृणम्***

2. ***गुण*** - (***आद् गुणः***)- ***अ/आ के बाद इ/ई, उ/ऊ, ऋ/ॄ अथवा लृ के रहने पर दोनो के स्थान पर क्रमशः गुण*** (***ए, ओ, अर्, अल्***) ***हो जाता है, जैसे*** -

***उप + इन्द्र = उपेन्द्रः***

***उमा+ईशः = उमेशः***

महा + इन्द्रः = महेन्द्रः

गण + ईशः = गणेशः

सूर्य + उदयः = सूर्योदयः

महा + उत्सवः = महोत्सवः

महा + ऊर्जा = महोर्जा

सूर्य + ऊष्मा = सूर्योष्मा

वसन्त + ऋतुः = वसन्तर्तुः

वर्षा + ऋतुः = वर्षर्तुः

तव+लृकारः = तवल्कारः

**शब्द रूप**

शब्द पाँच प्रकार के होते हैं - 1. संज्ञा 2. सर्वनाम 3. विशेषण 4. अव्यय 5. क्रिया।

संज्ञाएँ छह प्रकार की होती हैं-

1. स्वरान्त (अजन्त) पुंल्लिङ्ग

2. स्वरान्त (अजन्त) स्त्रीलिङ्ग

3. स्वरान्त (अजन्त) नपुंसकलिङ्ग

4. हलन्त (व्यञ्जनान्त) पुंल्लिङ्ग

5. हलन्त (व्यञ्जनान्त) स्त्रीलिङ्ग

6. ***हलन्त*** (***व्यञ्जनान्त***) ***नपुंसकलिङ्ग*** ।

***इन सबके रूप तीनों वचनों*** (***एकवचन***, ***द्विवचन तथा बहुवचन***) ***और सातो विभक्तियों*** (***प्रथमा***, ***द्वितीया***, ***तृतीया***, ***चतुर्थी***, ***पञ्चमी***, ***षष्ठी***, ***सप्तमी***) ***में चलते हैं***। ***सम्बोधन प्रथमा से भिन्न नहीं है***। ***रूप में अन्तर केवल एकवचन में होता है***।

## अकारान्त (पुंल्लिङ्ग)

### नर (मनुष्य)

| विभक्तिः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | नरः | नरौ | नराः |
| द्वितीया | नरम् | नरौ | नरान् |
| तृतीया | नरेण | नराभ्याम् | नरैः |
| चतुर्थी | नराय | " | नरेभ्यः |
| पञ्चमी | नरात् | " | " |
| षष्ठी | नरस्य | नरयोः | नराणाम् |
| सप्तमी | नरे | " | नरेषु |
| सम्बोधनम् | हे नर ! | हे नरौ ! | हे नराः! |

राम, पुत्र, नृप, शिष्य, सूर्य, चन्द्र, मयूर, धर्म इत्यादि शब्दों के रूप नर शब्द के अनुसार होंगे।

जिस शब्द में ऋ, र, ष के बाद 'न' आता है, वहाँ तृतीया षष्ठी विभक्ति में न के स्थान पर ण होता है।

**बालक (लड़का)**

*प्रथमा बालकः- बालकौ -बालकाः*

*द्वितीया बालकम् -“- बालकान्*

*तृतीयाबालकेन बालकाभ्याम्- बालकैः*

*चतुर्थी बालकाय - “ - बालेभ्यः*

*पञ्चमी बालकात्- “ - “*

*षष्ठीबालकस्य- बालकयोः-बालकानाम्*

*सप्तमी बालके - “ - बालकेषु*

*सम्बोधनम् हेबालक! हे बालकौ!हे बालकाः !*

*वृक्ष, लोक, पाठ, लेख, शिक्षक, अभ्यास, समय, अवकाश, इत्यादि शब्दों के रूप बालक शब्द के अनुसार होंगे।*

## आकारान्त (स्त्रीलिङ्ग)

**गङ्गा**

*प्रथमा गङ्गा -गङ्गे -गङ्गाः*

*द्वितीया गङ्गाम्* - " - "

*तृतीया-गङ्गया-गङ्गाभ्याम्-गङ्गाभिः*

*चतुर्थी- गङ्गायै* - " - *गङ्गाभ्यः*

*पञ्चमी गङ्गायाः* -" - "

*षष्ठी गङ्गायाः -गङ्गयोः -गङ्गानाम्*

*सप्तमी गङ्गायाम्* - " *-गङ्गासु*

*सम्बोधनम् हे गङ्गे!- हे गङ्गे!- हे गङ्गाः!*

**लता**

प्रथमा लता लते लताः

द्वितीया लताम् लते लताः

तृतीया लतया लताभ्याम् लताभिः

चतुर्थी लतायै “ लताभ्यः

पञ्चमी लतायाः “ “

षष्ठी “ लतयोः लतानाम्

सप्तमी लतायाम् “ लतासु

सम्बोधनम् हे लते! हे लते! हे लताः !

इसी प्रकार - बाला, कन्या, निशा, कला आदि शब्दों के रूप चलते हैं, लेकिन रमा, भार्या, तारा आदि के रूप में षष्ठी बहुवचन में 'न' को 'ण' होता है, जैसे --रमाणाम् ।

## अकारान्त (नपुंसकलिङ्ग)

**पुस्तक**

प्रथमा पुस्तकम् ,पुस्तके, पुस्तकानि

द्वितीया पुस्तकम् ,पुस्तके ,पुस्तकानि

तृतीया पुस्तकेन ,पुस्तकाभ्याम् ,पुस्तकैः

चतुर्थी पुस्तकाय , पुस्तकाभ्याम्, पुस्तकेभ्यः

पञ्चमी पुस्तकात् , पुस्तकाभ्याम् ,पुस्तकेभ्यः

षष्ठी पुस्तकस्य ,पुस्तकयोः ,पुस्तकानाम्

सप्तमी पुस्तके ,पुस्तकयोः ,पुस्तकेषु

सम्बोधनम् हे पुस्तक !, हे पुस्तके !, हे पुस्तकानि !

अकारान्त नपुंसकलिङ्ग शब्द के रूप तृतीया आदि विभक्तियों में अकारान्त पुंलिङ्ग शब्द के रूपों के समान होते हैं।

**वन**

प्रथमा वनम्, वने ,वनानि

द्वितीया वनम् ,वने, वनानि

तृतीया वनेन ,वनाभ्याम् ,वनैः

चतुर्थी वनाय ,वनाभ्याम् ,वनेभ्यः

पञ्चमी वनात् ,वनाभ्याम् ,वनेभ्यः

षष्ठी वनस्य ,वनयोः ,वनानाम्

सप्तमी वने ,वनयोः ,वनेषु

सम्बोधनम् हे वन!, हे वने !, हे वनानि

मुख, कुसुम, पुष्प, कमल, मित्र (सुहृद्वाचक), तृण, ज्ञान, जल, बीज आदि के रूप भी इसी प्रकार चलते हैं। पुष्प, मित्र, शरीर आदि के प्रथमा,द्वितीया तथा षष्ठी बहुवचन में 'न' के स्थान पर 'ण' हो जाता है।

## सर्वनाम

*सर्व, विश्व, किम्, यद्, तद्, एतद्, अस्मद्, युष्मद् आदि शब्द सर्वनाम कहलाते हैं, जो संज्ञा के स्थान पर सबके लिए प्रयोग किये जाते हैं। इनका सम्बोधन में रूप नही होता।*

### सर्व (पुंल्लिङ्ग)

*प्रथमा सर्वः, सर्वौ ,सर्वे*

*द्वितीया सर्वम् ,सर्वौ, सर्वान्*

*तृतीया सर्वेण ,सर्वाभ्याम् ,सर्वैः*

*चतुर्थी सर्वस्मै ,सर्वाभ्याम्, सर्वेभ्यः*

*पञ्चमी सर्वस्मात् ,सर्वाभ्याम् ,सर्वेभ्यः*

*षष्ठी सर्वस्य ,सर्वयोः ,सर्वेषाम्*

*सप्तमी सर्वस्मिन् ,सर्वयोः ,सर्वेषु*

**सर्व (स्त्रीलिङ्ग)**

*प्रथमा सर्वा सर्वे सर्वाः*

*द्वितीया सर्वाम् सर्वे सर्वाः*

*तृतीया सर्वया सर्वाभ्याम् सर्वाभिः*

*चतुर्थी सर्वस्यै सर्वाभ्याम् सर्वाभ्यः*

*पञ्चमी सर्वस्याः सर्वाभ्याम् सर्वाभ्यः*

*षष्ठी सर्वस्याः सर्वयोः सर्वासाम्*

*सप्तमी सर्वस्याम् सर्वयोः सर्वासु*

**सर्व (नपुंसकलिङ्ग)**

***प्रथमा सर्वम् सर्वे सर्वाणि***

***द्वितीया सर्वम् सर्वे सर्वाणि***

***शेष रूप पुंल्लिङ्ग के समान ।***

**किम् (पुंल्लिङ्ग)**

प्रथमा कः कौ के

द्वितीया कम् कौ कान्

तृतीया केन काभ्याम् कैः

चतुर्थी कस्मै काभ्याम् केभ्यः

पञ्चमी कस्मात् काभ्याम् केभ्यः

षष्ठी कस्य कयोः केषाम्

सप्तमी कस्मिन् कयोः केषु

## किम् (स्त्रीलिङ्ग)

प्रथमा का के काः

द्वितीया काम् के काः

तृतीया कया काभ्याम् काभिः

चतुर्थी कस्यै काभ्याम् काभ्यः

पञ्चमी कस्याः काभ्याम् काभ्यः

षष्ठी कस्याः कयोः कासाम्

सप्तमी कस्याम् कयोः कासु

## ***किम् (नपुंसकलिङ्ग)***

***प्रथमा किम् के कानि***

***द्वितीया किम् के कानि***

***<u>विशेषः- शेष विभक्तियों के रूप पुंल्लिङ्ग के समान होते हैं।</u>***

**अस्मद् (मैं, उत्तम पुरुष)**

प्रथमा अहम् आवाम् वयम्

द्वितीया माम्, मा आवाम्, नौ अस्मान्, नः

तृतीया मया आवाभ्याम् अस्माभिः

चतुर्थी मह्यम्, मे आवाभ्याम्, नौ अस्मभ्यम्, नः

पञ्चमी मत् आवाभ्याम् अस्मत्

षष्ठी मम, मे आवयोः, नौ अस्माकम्, नः

सप्तमी मयि आवयोः अस्मासु

**युष्मद् (तुम, मध्यम पुरुष)**

*प्रथमा त्वम् युवाम् यूयम्*

*द्वितीया त्वाम्, त्वा युवाम्, वाम् युष्मान्, वः*

*तृतीया त्वया युवाभ्याम् युष्माभिः*

*चतुर्थी तुभ्यम्, ते युवाभ्याम्, वाम् युष्मभ्यम्, वः*

*पञ्चमी त्वत् युवाभ्याम् युष्मत्*

*षष्ठी तव, ते युवयोः, वाम् युष्माकम्, वः*

*सप्तमी त्वयि युवयोः युष्मासु*

*विशेषः- अस्मद्, युष्मद् को छोड़कर सभी सर्वनाम और सम्पूर्ण संज्ञा शब्द प्रथम पुरुष क्रिया के साथ प्रयुक्त होते हैं। अस्मद् शब्द के साथ उत्तमपुरुष क्रिया एवं युष्मद् शब्द के साथ मध्यमपुरुष का प्रयोग किया जाता है।*

## ***विशेषण***

***संज्ञा की विशेषता बताने वाले शब्द <u>विशेषण</u> कहे जाते हैं। ये जिनकी विशेषता बताते हैं, उन्हें <u>विशेष्य</u> कहते हैं। विशेषण शब्दों के रूप विशेष्य के समान होते हैं -- यल्लिङ्गं यद् वचनं या च विभक्तिः विशेष्येषु।***

***तल्लिङ्गं तद् वचनं सा च विभक्तिः विशेषणेषु।***

***जैसेः-***

***सुन्दरः बालकः, सुन्दरी बालिका ,सुन्दरं वनम्***

***सुन्दरं बालकम्, सुन्दरीं बालिकाम्, सुन्दरं पुष्पम्***

***सुन्दराः बालकाः ,सुन्दर्यौ बालिके, सुन्दर्यः बालिकाः***

***शोभनः ग्रन्थः ,शोभना पत्रिका ,शोभनं पुस्तकम्***

***शोभनौ ग्रन्थौ ,शोभने पत्रिके, शोभने पुस्तके***

***शोभनाः ग्रन्थाः, शोभनाः पत्रिकाः ,शोभनानि पुस्तकानि***

## अव्यय

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।

वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ।

जिन शब्दों का तीनों लिंगों, विभक्तियों तथा तीनों वचनों में एक जैसा रूप होता है (बदलता नहीं) उन्हें अव्यय कहते हैं, जैसे -

तत्र-वहाँ, अत्र-यहाँ, सर्वत्र- सभी जगह, यदा-जब

श्वः - कल (आने वाला), ह्यः - कल (बीता हुआ)

ततः - तब, फिर, वहाँ से प्रायः - बहुधा ।

पश्चात् - बाद में, पीछे परन्तु - (परम् +तु) लेकिन

यद्यपि - (यदि+अपि) हालाँकि अधः - नीचे

इन शब्दों का प्रयोग वाक्य में क्रिया-विशेषण की तरह होता है।

## *कारक*

*'क्रियान्वयित्वं कारकत्वम्' - जिनका क्रिया के साथ सम्बन्ध होता है, उन्हें कारक कहते हैं।*

*कारक छः प्रकार के हैं-*

*कर्ता - प्रथमा विभक्ति (कर्तृवाच्य में), तृतीया विभक्ति (कर्म और भाववाच्य में),*

*कर्म - द्वितीया विभक्ति (कर्तृवाच्य में), प्रथमा विभक्ति (कर्मवाच्य में)*

*करण - तृतीया विभक्ति*

*सम्प्रदान - चतुर्थी विभक्ति*

*अपादान - पञ्चमी विभक्ति*

*अधिकरण - सप्तमी विभक्ति*

*सम्बन्ध तथा सम्बोधन कारक नहीं हैं। सम्बन्ध में षष्ठी विभक्ति होती है और सम्बोधन में प्रथमा।*

**संख्यावाचकाः शब्दाः (गणना)**

1. *एक एकः एका एकम्*

2. *द्वि द्वौ द्वे द्वे*

3. *त्रि त्रयः तिस्रः त्रीणि*

4. *चतुर् चत्वारः चतस्रः चत्वारि*

*एकः बालकः एका बालिका एकम् फलम्*

*विशेष- चार से आगे की गिनतियाँ तीनों लिङ्गों में समान रूप से चलती हैं।*

5. *पञ्च* 13. *त्रयोदश*

6. *षट्* 14. *चतुर्दश*

7. *सप्त* 15. *पञ्चदश*

8. *अष्ट* 16. *षोडश*

9. *नव* 17. *सप्तदश*

10. *दश* 18. *अष्टादश*

11. *एकादश* 19. *एकोनविंशतिः*

12. *द्वादश* 20. *विंशतिः*

*'एक' शब्द का रूप (तीनों लिङ्गों में) केवल एकवचन में, द्वि शब्द का केवल द्विवचन में और त्रि से लेकर दश तक संख्यावाची शब्दों के रूप केवल बहुवचन में चलते हैं।*

*नित्य स्त्रीलिङ्ग ऊनविंशति, विंशति आदि इकारान्त संख्यावाची शब्दों के रूप मति के समान केवल एकवचन में चलते हैं।*

## धातुरूप

धातु- क्रियावाचक 'भू', 'पठ्' आदि को धातु कहते हैं। सभी धातुएँ भ्वादि, अदादि, जुहोत्यादि, दिवादि, स्वादि, तुदादि, रुधादि, तनादि, क्रयादि और चुरादि दस गणों में विभक्त हैं। इनमें रूप की दृष्टि से कुछ परस्मैपदी, कुछ आत्मनेपदी और कुछ उभयपदी हैं। काल और अवस्था के अनुसार इनका रूप 10 लकारों में होता है। पाठ्यक्रम में केवल पाँच लकार निर्धारित हैं- लट् (वर्तमान), लृट् (भविष्य), लोट् (आज्ञा), लङ् (भूत) और लिङ् (विधि इत्यादि)।

इनका रूप तीनों पुरुषों (प्रथम, मध्यम तथा उत्तम) के तीनों वचनों (एक0, द्वि0, बहु0) में चलता है।

**भू (होना)**

## लट्लकारः (वर्तमानकाल)

प्रथमपुरुषः भवति भवतः भवन्ति

मध्यमपुरुषः भवसि भवथः भवथ

उत्तमपुरुषः भवामि भवावः भवामः

## लोट्लकारः (आज्ञा/प्रार्थना)

प्रथमपुरुषः भवतु/भवतात् भवताम् भवन्तु

मध्यमपुरुषः भव/भवतात् भवतम् भवत

उत्तमपुरुषः भवानि भवाव भवाम

## लिङ्लकारः (विधि /सम्भावना)

प्रथमपुरुषः भवेत् भवेताम् भवेयुः

मध्यमपुरुषः भवेः भवेतम् भवेत

उत्तमपुरुषः भवेयम् भवेव भवेम

## लङ्लकारः (भूतकाल)

*प्रथमपुरुषः अभवत् अभवताम् अभवन्*

*मध्यमपुरुषः अभवः अभवतम् अभवत*

*उत्तमपुरुषः अभवम् अभवाव अभवाम*

## *लृट्लकारः (भविष्यत्काल)*

*प्रथमपुरुषः भविष्यति भविष्यतः भविष्यन्ति*

*मध्यमपुरुषः भविष्यसि भविष्यथः भविष्यथ*

*उत्तमपुरुषः भविष्यामि भविष्यावः भविष्यामः*

**पठ् (पढ़ना)**

## लट्लकारः (वर्तमान काल)

प्रथमपुरुषः पठति पठतः पठन्ति

मध्यमपुरुषः पठसि पठथः पठथ

उत्तमपुरुषः पठामि पठावः पठामः

## लोट्लकारः (आज्ञा/प्रार्थना)

प्रथमपुरुषः पठतु/पठतात् पठताम् पठन्तु

मध्यमपुरुषः पठ/पठतात् पठतम् पठत

उत्तमपुरुषः पठानि पठाव पठाम

## लिङ्लकारः (विधि/सम्भावना )

प्रथमपुरुषः पठेत् पठेताम् पठेयुः

मध्यमपुरुषः पठेः पठेतम् पठेत

उत्तमपुरुषः पठेयम् पठेव पठेम

## लङ्लकारः (भूतकाल)

*प्रथमपुरुषः अपठत् अपठताम् अपठन्*

*मध्यमपुरुषः अपठः अपठतम् अपठत*

*उत्तमपुरुषः अपठम् अपठाव अपठाम*

## *लृट्लकारः (भविष्यत्काल)*

*प्रथमपुरुषः पठिष्यति पठिष्यतः पठिष्यन्ति*

*मध्यमपुरुषः पठिष्यसि पठिष्यथः पठिष्यथ*

*उत्तमपुरुषः पठिष्यामि पठिष्यावः पठिष्यामः*

**खेल् (खेलना)**

## लट्लकारः (वर्तमानकाल)

प्रथमपुरुषः खेलति खेलतः खेलन्ति

मध्यमपुरुषः खेलसि खेलथः खेलथ

उत्तमपुरुषः खेलामि खेलावः खेलामः

## लोट्लकारः (आज्ञा/प्रार्थना)

प्रथमपुरुषः खेलतु/खेलतात् खेलताम् खेलन्तु

मध्यमपुरुषः खेल/खेलतात् खेलतम् खेलत

उत्तमपुरुषः खेलानि खेलाव खेलाम

## लिङ्लकारः (विधि/सम्भावना )

प्रथमपुरुषः खेलेत् खेलेताम् खेलेयुः

मध्यमपुरुषः खेलेः खेलेतम् खेलेत

उत्तमपुरुषः खेलेयम् खेलेव खेलेम

## लङ्लकारः (भूतकाल)

प्रथमपुरुषः अखेलत् अखेलताम् अखेलन्

*मध्यमपुरुषः अखेलः अखेलतम् अखेलत*

*उत्तमपुरुषः अखेलम् अखेलाव अखेलाम*

## *लृट्लकारः (भविष्यत्काल)*

*प्रथमपुरुषः खेलिष्यति खेलिष्यतः खेलिष्यन्ति*

*मध्यमपुरुषः खेलिष्यसि खेलिष्यथः खेलिष्यथ*

*उत्तमपुरुषः खेलिष्यामि खेलिष्यावः खेलिष्यामः*

**गम् (गच्छ्) जाना**

## लट्लकारः (वर्तमानकाल)

प्रथमपुरुषः गच्छति गच्छतः गच्छन्ति

मध्यमपुरुषः गच्छसि गच्छथः गच्छथ

उत्तमपुरुषः गच्छामि गच्छावः गच्छामः

## लोट्लकारः (आज्ञा/प्रार्थना)

प्रथमपुरुषः गच्छतु/गच्छतात् गच्छताम् गच्छन्तु

मध्यमपुरुषः गच्छ/गच्छतात् गच्छतम् गच्छत

उत्तमपुरुषः गच्छानि गच्छाव गच्छाम

## लिङ्लकारः (विधि/ संम्भावना)

प्रथमपुरुषः गच्छेत् गच्छेताम् गच्छेयुः

मध्यमपुरुषः गच्छेः गच्छेतम् गच्छेत

उत्तमपुरुषः गच्छेयम् गच्छेव गच्छेम

## लङ्लकारः (भूतकाल)

प्रथमपुरुषः अगच्छत् अगच्छताम् अगच्छन्

*मध्यमपुरुषः अगच्छः अगच्छतम् अगच्छत*

*उत्तमपुरुषः अगच्छम् अगच्छाव अगच्छाम*

## *लृट्लकारः (भविष्यत्काल)*

*प्रथमपुरुषः गमिष्यति गमिष्यतः गमिष्यन्ति*

*मध्यमपुरुषः गमिष्यसि गमिष्यथः गमिष्यथ*

*उत्तमपुरुषः गमिष्यामि गमिष्यावः गमिष्यामः*

**नम् (नमस्कार करना/झुकना)**

## लट्लकारः (वर्तमानकाल)

प्रथमपुरुषः नमति नमतः नमन्ति

मध्यमपुरुषः नमसि नमथः नमथ

उत्तमपुरुषः नमामि नमावः नमामः

## लोट्लकारः (आज्ञा/प्रार्थना)

प्रथमपुरुषः नमतु/नमतात् नमताम नमन्तु

मध्यमपुरुषः नम/नमतात् नमतम् नमत

उत्तमपुरुषः नमानि नमाव नमाम

## लिङ्लकारः (विधि/सम्भावना)

प्रथमपुरुषः नमेत् नमेताम् नमेयुः

मध्यमपुरुषः नमेः नमेतम् नमेत

उत्तमपुरुषः नमेयम् नमेव नमेम

## लङ्लकारः (भूतकाल)

प्रथमपुरुषः अनमत् अनमताम् अनमन्

*मध्यमपुरुषः अनमः अनमतम् अनमत*

*उत्तमपुरुषः अनमम् अनमाव अनमाम*

## *लृट्लकारः (भविष्यत्काल)*

*प्रथमपुरुषः नंस्यति नंस्यतः नंस्यन्ति*

*मध्यमपुरुषः नंस्यसि नंस्यथः नंस्यथ*

*उत्तमपुरुषः नंस्यामि नंस्यावः नंस्यामः*

**पा (पिब्)-पीना**

## लट्लकारः (वर्तमानकाल)

प्रथमपुरुषः पिबति पिबतः पिबन्ति

मध्यमपुरुषः पिबसि पिबथः पिबथ

उत्तमपुरुषः पिबामि पिबावः पिबामः

## लोट्लकारः (आज्ञा/प्रार्थना)

प्रथमपुरुषः पिबतु/पिबतात् पिबताम् पिबन्तु

मध्यमपुरुषः पिब/पिबतात् पिबतम् पिबत

उत्तमपुरुषः पिबानि पिबाव पिबाम

## लिङ्लकारः (विधि/ सम्भावना)

प्रथमपुरुषः पिबेत् पिबेताम् पिबेयुः

मध्यमपुरुषः पिबेः पिबेतम् पिबेत

उत्तमपुरुषः पिबेयम् पिबेव पिबेम

## लङ्लकारः (भूतकाल)

प्रथमपुरुषः अपिबत् अपिबताम् अपिबन्

***मध्यमपुरुषः अपिबः अपिबतम् अपिबत***

***उत्तमपुरुषः अपिबम् अपिबाव अपिबाम***

## ***लृट्लकारः (भविष्यत्काल)***

***प्रथमपुरुषः पास्यति पास्यतः पास्यन्ति***

***मध्यमपुरुषः पास्यसि पास्यथः पास्यथ***

***उत्तमपुरुषः पास्यामि पास्यावः पास्यामः***

**अस् (होना)**

## लट्लकारः (वर्तमानकाल)

प्रथमपुरुषः अस्ति स्तः सन्ति

मध्यमपुरुषः असि स्थः स्थ

उत्तमपुरुषः अस्मि स्वः स्मः

## लोट्लकारः (आज्ञा/प्रार्थना)

प्रथमपुरुषः अस्तु/स्तात् स्ताम् सन्तु

मध्यमपुरुषः एधि/स्तात् स्तम् स्त

उत्तमपुरुषः असानि असाव असाम

## लिङ्लकारः (विधि/सम्भावना)

प्रथमपुरुषः स्यात् स्याताम् स्युः

मध्यमपुरुषः स्याः स्यातम् स्यात

उत्तमपुरुषः स्याम् स्याव स्याम

## लङ्लकारः (भूतकाल)

प्रथमपुरुषः आसीत् आस्ताम् आसन्

*मध्यमपुरुषः आसीः आस्तम् आस्त*

*उत्तमपुरुषः आसम् आस्व आस्म*

## *लृट्लकारः (भविष्यत्काल)*

*प्रथमपुरुषः भविष्यति भविष्यतः भविष्यन्ति*

*मध्यमपुरुषः भविष्यसि भविष्यथः भविष्यथ*

*उत्तमपुरुषः भविष्यामि भविष्यावः भविष्यामः*

**कृ धातु (करना)**

## लट्लकारः (वर्तमानकाल)

प्रथमपुरुषः करोति कुरुतः कुर्वन्ति

मध्यमपुरुषः करोषि कुरुथः कुरुथ

उत्तमपुरुषः करोमि कुर्वः कुर्मः

## लोट्लकारः (आज्ञा/प्रार्थना)

प्रथमपुरुषः करोतु/कुरुतात् कुरुताम् कुर्वन्तु

मध्यमपुरुषः कुरु/कुरुतात् कुरुतम् कुरुत

उत्तमपुरुषः करवाणि करवाव करवाम

## लिङ्लकारः (विधि/सम्भावना)

प्रथमपुरुषः कुर्यात् कुर्याताम् कुर्युः

मध्यमपुरुषः कुर्याः कुर्यातम् कुर्यात

उत्तमपुरुषः कुर्याम् कुर्याव कुर्याम

## लङ्लकारः (भूतकाल)

प्रथमपुरुषः अकरोत् अकुरुताम् अकुर्वन्

*मध्यमपुरुषः अकरोः अकुरुतम् अकुरुत*

*उत्तमपुरुषः अकरवम् अकुर्व अकुर्म*

## लृट्लकारः (भविष्यत्काल)

*प्रथमपुरुषः करिष्यति करिष्यतः करिष्यन्ति*

*मध्यमपुरुषः करिष्यसि करिष्यथः करिष्यथ*

*उत्तमपुरुषः करिष्यामि करिष्यावः करिष्यामः*

*निर्देशन –*

- *श्री संजय सिन्हा, निदेशक, राज्य शैक्षिक अनुसन्धान एवं प्रशिक्षण परिषद् ,उ.प्र.*
- *श्री अजय कुमार सिंह ,संयुक्त निदेशक, राज्य शैक्षिक अनुसन्धान एवं प्रशिक्षण परिषद् ,उ.प्र.*

**e-book *विकास* ---**

- *अल्पा निगम(प्र.अ.) ,प्राथमिक विद्यालय तिलौली, गोरखपुर*
- *अमित शर्मा(स.अ),उच्च प्राथमिक विद्यालय महतवानी, उन्नाव*
- *अनीता विश्वकर्मा(स.अ), प्राथमिक विद्यालय सैदपुर पीलीभीत*
- *अनुभव यादव(स.अ), प्राथमिक विद्यालय गुलरिया उन्नाव*
- *अनुपम चौधरी (स.अ),प्राथमिक विद्यालय नौरंगाबाद बदायूं*
- *आशुतोष आनंद (स.अ),उच्च प्राथमिक विद्यालय मियाँगंज बाराबंकी*
- *दीपक कुशवाहा (स.अ),उच्च प्राथमिक विद्यालय गजफ्फरनगर, उन्नाव*
- *फिरोज खान (स.अ),प्राथमिक विद्यालय चिड़ावक, बुलंदशहर*
- *गौरव सिंह (स.अ),उच्च प्राथमिक विद्यालय फतेहपुर मठिया, फतेहपुर*
- *हृतिक वर्मा (स.अ),प्राथमिक विद्यालय संग्राम खेड़ा ,उन्नाव*
- *नितिन कुमार पाण्डेय (स.अ),प्राथमिक विद्यालय मध्यनगर ,श्रावस्ती*
- *मनीष प्रताप सिंह (स.अ),प्राथमिक विद्यालय प्रेम नगर, फतेहपुर*
- *प्राणेश भूषण मिश्र (स.अ),पूर्व माध्यमिक विद्यालय पठा, ललितपुर*
- *प्रशांत चौधरी (स.अ),प्राथमिक विद्यालय रवाना, बिजनौर*
- *राजीव कुमार साहू (स.अ),उच्च प्राथमिक विद्यालय ,सराय गोकुल सुल्तानपुर*
- *शशि कुमार(स.अ), प्राथमिक विद्यालय खेड़ा, लच्छीखेड़ा,अकोहरी उन्नाव*
- *शिवाली गुप्ता (स.अ),पूर्व माध्यमिक विद्यालय धौलरी,मेरठ*
- *वरुणेश मिश्रा (स.अ),प्राथमिक विद्यालय मदनपुर पनियार ,सुल्तानपुर*